येऽन्ये कामिनः सर्वथैव भक्तिहीनास्तेषां गतिमाह—

त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।
ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान्दिवि देवभोगान् ॥२०॥
ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।
एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते ॥२१॥

ऋगादितिस्रो विद्या आधीयन्ते विदन्ति वेति त्रैविद्या याज्ञिका सोमं पिबन्तीति सोमपा अत एव पूतपापाः शुद्धकिल्बिषा यज्ञैरग्निष्टोमादिभिर्मां वस्वादिदेवरूपिणमीश्वरमिष्ट्वा पूजयित्वा स्वर्गतिं प्रार्थयन्ते, ते पुण्यं पुण्यफलं सुरेन्द्रलोकं स्वर्गमिन्द्रस्य लोकमासाद्य संप्राप्य दिवि स्वर्गे दिव्यान् दिवि भवान् देवभोगान् देवानां भोगानश्नन्ति भुञ्जते ॥ २० ॥ तस्य विनाशित्वादनिष्टतां बोधयति, ते विशालं विस्तीर्णं तं स्वर्गलोकं भुक्त्वा भोगेन पुण्ये कर्मणि क्षीणे नष्टे सतीमं मर्त्यलोकं विशन्त्याविशन्ति, गर्भादिदुःखमनुभवन्ति, एवं यथोक्तेन प्रकारेण त्रयीधर्मं वेदत्रयप्रतिपादितधर्मं यागमनुप्रपन्नाः प्रकर्षेणानुसृतवन्तः कामान् विषयान् कामयन्त इति कामकामा गताऽगतं गमनागमनं पुनः पुनर्लभन्ते न तु स्वातन्त्र्यं लभन्त इति ॥ २१ ॥

निष्कामाः सम्यग्दर्शिनो मद्भक्ताः कृतार्था निरुपद्रवा भवन्तीत्याह—

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥२२॥

अनन्या अपृथग्भूता मत्तो ज्ञानिनोऽनन्यशरणा भक्ताः सर्वात्मकं मामेव मन्यमाना मां प्रत्यगभिन्नं चिन्तयन्तो ये जना मामेव पर्युपासते परितः सर्वतोऽपरिच्छिन्नतया पश्यन्तः सेवन्ते, तेषां

स्वयं योगक्षेमार्थं प्रवृत्तिरहितानां नित्याभियुक्तानां नित्यं ध्यानादि-निष्ठानां योगक्षेममहमेव वहामि प्रापयामि विशेषेण, सामान्यतस्तु सर्वप्राणिनां योगक्षेमं वहाम्येव ॥ २२ ॥

ननु सर्वदेवतात्मकत्वात्तव किमिति देवान्तरभक्ता गतागतं लभन्त इति चेदाह—

येऽप्यन्यदेवता भक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय ! यजन्त्यविधिपूर्वकम् ॥२३॥

हे कौन्तेय ! येऽप्यन्यासु देवतासु भक्ता अन्यदेवताभक्ताः श्रद्ध-याऽन्विता आस्तिक्यबुद्धियुक्ताः सन्तोऽन्यदेवता यजन्ते पूजयन्ति तेऽपि वस्तुगत्या मामेवाविधिपूर्वकमज्ञानपूर्वकं यजन्ति सर्वात्मानं मामज्ञात्वा यजन्ति ॥ २३ ॥



अविधिपूर्वकत्वं विवृण्वन् फलप्रच्युतिममीषामाह—

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥२४॥

अहमेव सर्वेषां यज्ञानां श्रौतानां स्मार्तानां च देवतारूपेण भोक्ताऽस्मि, अन्तर्यामिरूपेण प्रभुरस्मि फलदातृत्वेन चाधियज्ञ-त्वात् , देवतान्तरयाजिनो मामीदृशं तत्त्वेन तत्त्वतो न जानन्ति, अतो यज्ञफलभोगान्ते ते च्यवन्ति स्वर्गात् पुनश्च मर्त्यलोकं विशन्ति देवेष्वपि भगवन्तं पश्यन्तस्तदर्पितकर्माणस्तु क्रमेण मुच्यन्त एवेति भावः ॥ २४ ॥

अविधिपूर्वकं यजतामपि फलावश्यंभावीति वदन् भगवद्या-यिनां तेभ्यो वैलक्षण्यमाह—

यान्ति देवव्रता देवान्पितॄन्यान्ति पितृव्रताः ।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ॥२५॥

देवेषु व्रतं नियमो भक्तिश्च येषां ते देवव्रता देवपूजका देवान् यान्ति, "तं यथा यथोपासते तदेव भवतीति" श्रुतेः, एवं पितृव्रताः पितॄन् यान्ति, भूतेज्या भूतेषु विनायकमातृकादिष्विज्या पूजा येषां ते तामसा भूतानि यान्ति, मद्याजिनो मां यष्टुं शीलं येषां मत्पूजका मां नित्यं यान्ति ॥ २५ ॥

अनन्तफलमपि मद्भजनं सुकरमित्याह—

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥२६॥
यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यासि कौन्तेय ! तत्कुरुष्व मदर्पणम् ॥२७॥

यो भक्तो मे मह्यं पत्रपुष्पफलजलादि किञ्चिदपि भक्त्या प्रेम्णा प्रयच्छति ददात्यर्पयति, प्रयतात्मनः शुद्धबुद्धेस्तद् भक्त्योपहृतमर्पितं भक्तिपूर्वकं समर्पितं पत्राद्यहमश्नामि, अशनवत् प्रीत्या स्वीकृत्य तृप्यामि "न ह वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति" इति श्रुतेः ॥ २६ ॥ यतो भक्त्यार्पितमल्पमपि स्वीकरोमि तस्मात्तदपि स्वार्थमेव नेच्छामि तस्माच्च यत्करोषि स्वतः प्राप्तं गमनादिकं यदश्नासि यज्जुहोषि हवनं संपादयसि, यच्च किञ्चिद् ददासि यत् तपस्यसि तपश्चरसि, हे कौन्तेय ! तत्सर्वं मदर्पणं मय्यर्पितं यथा स्यात्तथा कुरुष्व ॥ २७ ॥

एतादृशस्य भजनस्य फलमाह—

शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।
संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥२८॥

एवं सति सर्वकर्मणां मदर्पणं संन्यासः स एव योगः कर्मयोग-

स्तेन युक्त आत्माऽन्तःकरणं यस्य स त्वं संन्यासयोगयुक्तात्मा शुभाशुभे फले येषां तानि शुभाशुभफलानि कर्माणि तैः शुभाशुभफलैः कर्माण्येव बन्धनानि कर्मबन्धनानि तैः कर्मबन्धनैरेवं मत्समर्पणं कुर्वन् विमोक्ष्यसे कर्मबन्धनैर्जीवन्नेव विमुक्तः सन् देहे पतिते मां सच्चिदानन्दं ज्ञानप्राप्त्यैपैष्यसि मामागमिष्यसि ॥ २८ ॥

रागद्वेषवान् तर्हि भगवान् यतो भक्तानुगृह्णाति नेतरानिति चेदाह—

समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥२९॥

अहं सर्वभूतेषु समस्तुल्योऽस्मि सच्चिदानन्दात्मेश्वरोऽस्मि रागद्वेषादिरहितोऽत एव मे मम द्वेष्यः प्रियो वा कोऽपि नास्ति, तथापि तु ये मां भक्त्या भजन्ति ते स्वभावत एव मयि वर्तन्ते न मम रागनिमित्तं तथा तेष्वहमपि च स्वभावत एव वर्त्ते, नेतरेषु, शुद्धेषु, यथासूर्यादि प्रतिबिम्बं भवति नेतरेषु तथात्रापि ज्ञेयमिति भावः ॥ २९ ॥

भक्तेर्माहात्म्यमाह—

अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥३०॥

अपि चेत् यद्यपि सुदुराचारः सुष्ठु-अत्यन्तं दुष्ट आचारो यस्य स पूर्वं सुदुराचारोऽपि पश्चादनन्यभाग् न विद्यतेऽन्यस्मिन् भक्तिर्यस्य तथाभूतः सन् मां भजते स साधुः सम्यग् वृत्त एवेतिमन्तव्यो यस्मात्स सम्यग्व्यवसितो यथावद् व्यवसायं निश्चयं प्राप्तः ॥ ३० ॥

क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।
कौन्तेय ! प्रतिजानीहि न मे भक्तः प्रणश्यति ॥३१॥

भजनसामर्थ्याद् दुराचारतां त्यक्त्वा क्षिप्रं शीघ्रं धर्मात्मा धर्मचित्तो भवति, तत एव शश्वन्नित्यं शान्तिमुपशमं वितृष्णतां च निगच्छति प्राप्नोति, हे कौन्तेय ! प्रतिजानीहि निश्चितां प्रतिज्ञां कुरु, दुराचारोऽपि मद्भक्तः सन्न प्रणश्यतीति ॥ ३१ ॥

मां हि पार्थ ! व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥३२॥
किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ।
अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥३३॥

हे पार्थ ! पापं योनिर्येषां ते पापयोनयोऽपि ये स्युः पापजन्मानोऽपि ये भवेयुस्तेऽपि स्त्रियो वैश्यास्तथा शूद्रा अपि मां व्यपाश्रित्य संसेव्याऽऽश्रयत्वेन गृहीत्वा परां गतिं यान्ति ॥ ३२ ॥ पुण्याः पुण्ययोनयः सदाचारा ब्राह्मणास्तथा भक्ता राजर्षयश्च मां व्यपाश्रित्य परां गतिं यान्तीति पुनः किं वक्तव्यमस्ति, यस्मादेवं तस्मादनित्यं क्षणभङ्गुरमसुखं सुखवर्जितमिमं मानवं पुरुषार्थसाधनं दुर्लभं लोकं मनुष्यदेहं प्राप्य मां भजस्वात्र सुखाद्याशां त्यक्त्वा शरणमाश्रय ॥ ३३ ॥

भजनप्रकारं दर्शयन्नुपसंहरति—

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥३४॥

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे राजविद्याराजगुह्ययोगो नाम नवमोऽध्यायः ॥९॥

मन्मना मयि मनो यस्य स त्वं भव, तथा मद्भक्तो मद्याजी भव, मामेव च नमस्कुरु, एवमेतैः प्रकारैरात्मानं मनो युक्त्वा मयि समाधाय मत्परायणः सन् मामेवैष्यसि प्राप्स्यसि, अथवा भक्तियोगमेवं युक्त्वा विधाय मामेव सर्वात्मानमीश्वरं प्राप्स्यसीत्यर्थः ॥३४॥

सर्वात्मानमसङ्गं च सर्वेश्वरमनन्यधीः ।
अध्यक्षं प्रकृतेरेकं भजते श्रद्धया सदा ॥ १ ॥
येन ज्ञानेन भक्त्या च राजविद्या भवेद्धि तत् ।
गुह्यानामुत्तमं गुह्यं योगश्चैव सनातनः ॥ २ ॥
मानवेऽत्र सुदेहे सत्यनादृत्याखिलं जगत् ।
आत्मानं हरिमादृत्य तरेद् वै भवसागरम् ॥ ३ ॥

इति श्रीमत्स्वामिहनुमद्दासषट्शास्त्रिविरचितायां सारसंग्राहिकायां
टीकायां नवमोऽध्यायः ॥ ९ ॥



---

# दशमोऽध्यायः (१०)

सप्तमादिष्वध्यायेषु भगवतः सोपाधिकं निरुपाधिकं च तत्त्वमुक्तं विभूतयश्च संक्षेपतः प्रकाशिता अथेदानीं तासां विस्तरो वक्तव्यो भगवतो ध्यानाय तत्त्वमपि दुर्ज्ञेयत्वात्पुनरपि वक्तव्यमित्यतः—

श्रीभगवानुवाच

भूय एव महाबाहो ! शृणु मे परमं वचः ।
यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥ १ ॥

हे महाबाहो ! भूय एव पुनरपि मे मम परमं निरतिशयवस्तुप्रकाशकं प्रकृष्टं वचो वाक्यं शृणु, यत् परमं वचस्ते तुभ्यं प्रियमाणाय मद्वचनादमृतपानादिव प्रीतिमनुभवते प्रसन्नाय हितकाम्यया हितेच्छया प्रवक्ष्यामि ॥ १ ॥

प्राग्बहुधोक्तं किमर्थं पुनर्वक्ष्यसीत्यत आह—

न मे विदुः सुरगणाः प्रभवं न महर्षयः ।
अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥ २ ॥

मम प्रभवं प्रभावं प्रभुशक्त्यतिशयं, प्रभवनमुत्पत्तिमनेकविभूतिभिराविर्भावं वा देवा इन्द्रादयो महर्षयो भृग्वादयो वा न विदुर्न जानन्ति, हि यस्मादहं देवानां महर्षीणां च सर्वशः सर्वप्रकारैरादिः कारणमस्मि ॥ २ ॥

महाफलोक्तात्मज्ञानस्य कश्चिदेवाधिकारवानित्याह—

यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।
असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥ ३ ॥

यः कश्चित्सर्वकारणं मामजं जन्मरहितं कारणान्तराभावादत एवानादिं च तथा लोकानां महान्तं निरतिशयमीश्वरं सर्वज्ञं तुरीय-

मज्ञानतत्कार्यवर्जितं वेत्ति, मर्त्येषु मनुष्येष्वसंमूढः संमोहवर्जितो देहाद्यभिमानरहितः स ज्ञाताज्ञातैः सर्वपापैः प्रमुच्यते ज्ञानेन समूलपापोच्छेदात्, अहं ममादिमोहाभावाच्च ॥ ३ ॥

उक्तं लोकमहेश्वरत्वं प्रपञ्चयति—

बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः ।
सुखं दुःखं भवोऽभावो भयं चाभयमेव च ॥ ४ ॥
अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥ ५ ॥

बुद्धिरन्तःकरणस्य सूक्ष्माद्यर्थावबोधसामर्थ्यम्, ज्ञानमात्मादिपदार्थावबोधः, असंमोहः प्रत्युत्पन्नेषु ज्ञातव्येषु विवेकपुरःसरा बुद्धिप्रवृत्तिः, क्षमा आक्रोशादिष्वविकृतचित्तता, सत्यं यथार्थभाषणम्, दमो बाह्येन्द्रियनिरोधः, शमो मनोनिरोधः, सुखमाह्लादः, दुःखं तापः, भव उत्पत्तिः सत्ता, अभावो नाशोऽसत्ता, भयं त्रासः, अभयमत्रासः चकारावुक्तसमुच्चयानुक्ताऽबुद्ध्यज्ञानादिसमुच्चयार्थौ ॥ ४ ॥ अहिंसाऽपीडाप्राणिनाम्, समता समचित्तता, तुष्टिः सन्तोषोऽलं बुद्धिः, तपः शास्त्रमार्गेण कायेन्द्रियशोषणम्, दानं यथाशक्ति द्रव्यादिसंविभागः पात्रेऽर्पणम्, यशो धर्मनिमित्ता कीर्त्तिः, अयशोऽधर्मनिमित्तापकीर्त्तिः, एते पृथग्विधा नानाविधा भूतानां भावा बुद्ध्यादयः कार्यविशेषाः पदार्थाः स्वस्वकर्मानुरूपेण मत्त एव भवन्ति तस्मान्मम लोकमहेश्वरत्वमस्तीति ॥ ५ ॥

स्वसामर्थ्ययुक्तानां स्वेनोत्पादितानां भृग्वादीनामपि लोकेश्वरत्वं प्रसिद्धं किमु वक्तव्यं मम लोकमहेश्वरत्वमित्याह—

महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ।
मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥ ६ ॥

महर्षयः सप्त भृग्वादयः पूर्वेऽतीतकालसम्बन्धिनः, तथा च पुराणं "भृगुं मरीचिमत्रिं च पुलस्त्यं पुलहं क्रतुम्। वसिष्ठं च महातेजाः सोऽसृजन् मनसा सुतान्। सप्त ब्राह्मणा इत्येते पुराणे निश्चयं गताः"। तथा चत्वारो मनवः सावर्णा इति प्रसिद्धाः, अथवा चत्वार उक्तसप्तमहर्षिभ्योऽपि पूर्वकालिकाः सहचारित्वेन प्रसिद्धाः सनकसनन्दनसनातनसनत्कुमाराः, सर्वे मनवश्च मद्भावा मयि भावो भावना येषामतो वैष्णवेन सामर्थ्येन युक्ता मानसा मनसैवोत्पादिताः सन्तो जाता येषां महर्षीणां मनूनां च लोके विद्यया जन्मना चेमाः सर्वाः प्रजाः सन्ति। "मरीचिरङ्गिराश्चात्रिः पुलस्त्यः पुलहः क्रतुः। वसिष्ठ इति सप्तैवे मानसा निर्मिता हि ते॥ सनः सनत्सुजातश्च सनकः ससनन्दनः! सनत्कुमारः कपिलः सप्तमश्च सनातनः। सप्तैते मानसाः प्रोक्ता ऋषयो ब्रह्मणः सुताः"॥ तत्र मरीच्यादिविषयश्च श्लोकोऽस्ति—"एते वेदविदो मुख्या वेदाचार्याश्च कल्पिताः। प्रवृत्तिधर्मिणश्चैव प्राजापत्ये च कल्पिताः"॥ पुराणपठितभृगुस्थानेऽङ्गिराः पठितोऽन्ये च तुल्याः॥ "सावर्णिस्तु मनुर्योऽसौ मैत्रेय! भविता ततः। नवमो दक्षसावर्णिर्मैत्रेय! भविता मनुः॥ एकादशश्च भविता धर्मसावर्णिको मनुः। रुद्रपुत्रस्तु सावर्णो भविता द्वादशो मनुः"। एतेषां भावित्वेन स्वायंभुवादीनामाद्यानां चतुर्णां प्रधानानां ग्रहणमिति केचित्, गतकल्पीयानां सावर्णीनामेव भगवद्भक्तानां ग्रहणमद्यतना अपि प्रजाः कथञ्चन तेषामिति केचित्॥ ६॥

स्वप्रभावमुक्त्वा तज्ज्ञानफलमाह—

एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः।
सोऽविकम्पेन योगेन युज्यते नात्र संशयः॥ ७॥

यः कश्चिदेतां पूर्वोक्तां बुद्ध्यादिमहर्षिरूपां मम विभूतिं विस्तारं योगं युक्तिं योगैश्वर्यसामर्थ्यं च तत्त्वतो यथावद् वेत्ति सोऽविकम्पेनाप्रचलितेन योगेन सम्यगदर्शनस्थैर्यलक्षणेन युज्यते संबध्यतेऽत्रास्मिन्नर्थे संशयो नास्ति ॥ ७ ॥

कीदृशेनाविकम्पेन योगेन कथं युज्यते इत्युच्यते—

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते ।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ ८ ॥

अहं परं ब्रह्म परमात्मैव सर्वस्य जगतः प्रभव उत्पत्तिकारणमुपादानं, सर्वं स्थितिनाशादिजगत्, मत्तः सर्वज्ञादीश्वरादेव प्रवर्त्तते भवतीति मत्वा भावसमन्विता भावनया परमार्थतत्त्वाभिनिवेशेन युक्ता बुधास्तत्त्वज्ञा मामेव भजन्ते ॥ ८ ॥

प्रीतिपूर्वकं भजनमेवाह—

मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥ ९ ॥

मयि परमेश्वरे चित्तं येषां ते मच्चित्ताः, मद्गताः प्राणाश्चक्षुरादय इन्द्रियाणि येषां मद्गतं जीवनं वा येषां ते मद्गतप्राणा मय्युपसंहृतकरणा मद्गतजीवना वा, गुरुमुखाच्छ्रुत्वा मां परस्परं बोधयन्तोऽवगमयन्तो मां च ज्ञानादियुक्तं शिष्येभ्यः कथयन्त उपदिशन्तस्तुष्यन्ति तेन च तोषेण रमन्ति ( रमन्ते ) ॥ ९ ॥

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥१०॥

तेषां पूर्वोक्तानां सततयुक्तानां निरन्तरमभियुक्तानां प्रीतिपूर्वकमेव भजतां लाभपूजादिकामरहितानां तमकम्पं बुद्धियोगं

सम्यग् बुद्धया सम्बन्धं ज्ञानात्मकं योगं ददामि येन योगेन ते नित्ययुक्ता मामुपयान्ति मच्चित्तादिप्रकारैर्भजमाना मामात्मत्वेन प्रतिपद्यन्ते ॥ १० ॥

दीयमानस्य बुद्धियोगस्यात्मप्राप्तौ-फले मध्यवर्तिनं व्यापारमाह—

तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥११॥

तेषां मच्चित्तत्वादिप्रकारैर्भजतामनुकम्पार्थं कथमेषां श्रेयः स्यादित्यनुग्रहार्थं दयाहेतोरात्मभावस्थोऽन्तःकरणस्य भावे वृत्तिविशेषात्मकाशये स्थितोऽहं भास्वता देदीप्यमानेन ज्ञानरूपेण दीपेनाज्ञानजमविवेकजं तमो मोहान्धकारं नाशयामि, शुद्धान्तःकरणेन सर्वात्मस्वरूपस्य ज्ञानादज्ञाननिवृत्तौ स्वयमेवात्मा प्रकाशतेऽज्ञानरूपकारणाभावाच्च मोहादयोऽपि निवर्तन्त इति भावः ॥११॥



यथोक्तं विभूतिं योगं च श्रुत्वा—

अर्जुन उवाच

परं ब्रह्म परं धाम पवित्रं परमं भवान् ।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥१२॥
आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ।
असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ॥१३॥
सर्वमेतदृतं मन्ये यन्मां वदसि केशव ! ।
न हि ते भगवन् ! व्यक्तिं विदुर्देवा न दानवाः ॥१४॥
स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम ! ।
भूतभावन ! भूतेश ! देवदेव ! जगत्पते ! ॥१५॥

वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।
याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥१६॥

भवान् परं निर्गुणं ब्रह्म, परं धाम परं तेजः, "यस्य भासा सर्वमिदं विभातीति" श्रुतेः, पवित्रं पावनं परमं सर्वोत्कृष्टं भवानेव, शाश्वतं नित्यं पुरुषं परमात्मानं दिव्यं दिवि परमे व्योम्नि भवमादिदेवं सर्वदेवानामादौ भवं देवमत एवाजं विभुं विभवन (व्यापन) शीलम् ॥१२॥ ईदृशं त्वां सर्वे ऋषयो भृग्वादय आहुस्तथा देवर्षिर्नारदोऽसितो देवलो व्यासश्चैतेऽप्याहुः स्वयं चैव मे मह्यं ब्रवीषि "ऋषीत्येष गतौ धातुः श्रुतौ सत्ये तपस्यथ । एतत्सन्नियतं यस्मिन् ब्रह्मणा स ऋषिः स्मृतः ॥ गत्यर्थादृषतेर्धातोर्नामनिर्वृत्तिरादितः । यस्मादेष स्वयंभूतस्तस्माच्च ऋषिता स्मृता ॥ देवर्षी धर्मपुत्रौ तु नरनारायणावुभौ । बालखिल्याः क्रतोः पुत्राः कर्दमः पुलहस्य तु ॥ पर्वतो नारदश्चैव कश्यपस्यात्मजावुभौ । ऋषन्ति देवान् यस्मात्ते तस्माद्देवर्षयः स्मृताः ॥ देवलोकप्रतिष्ठाश्च ज्ञेया देवर्षयः शुभाः । भूतभव्यभवज्ज्ञानं सत्याभिव्याहृतं तथा"। इत्यादि वायुपुराणे ॥१३॥ हे केशव ! एतत्सर्वं, ऋतं सत्यमहं मन्ये यत् त्वं मां वदसि ऋषिभिश्च यदुक्तं, हि यस्माद् हे भगवन् ! ते व्यक्ति प्रभवं प्रभावं वा देवा दानवाश्च न विदुः ॥१४॥ यतस्त्वं देवादीनामादिस्तस्मात्त्वं स्वयमेवान्योपदेशादिकमन्तरेणात्मानमीश्वरं निर्गुणं सगुणं च वेत्थ जानासि नान्यः कश्चित्, हे पुरुषोत्तम ! भूतानि भावयतीति भूतभावन ! भूतोत्पादक ! हे भूतेश ! भूतनियन्तः ! देवानामपि देवो हे देवदेव ! हे जगत्पते ! जगत्पालक ! ॥ १५ ॥ अतस्त्वं याभिर्विभूतिभिरिमान् सर्वाल्लोकान् व्याप्य तिष्ठसि या हि दिव्या आत्मनो विभूतयो माहात्म्यविस्तारा वर्तन्ते ता अशेषेण येन प्रकारेणोक्तौ न शिष्यन्ते तेन प्रकारेण वक्तुमर्हसि ॥ १६ ॥

कथनप्रयोजनं दर्शयन् प्रार्थयते—

कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन् ।
केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया ॥१७॥
विस्तरेणात्मनो योगं विभूतिं च जनार्दन ! ।
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥१८॥

हे योगिन् योगेश्वर ! अहं कथं सदा परिचिन्तयन् सदा ध्यायन्, त्वां विद्यां विजानीयाम्, हे भगवन् केषु केषु च भावेषु वस्तुषु त्वं मया चिन्त्यो ध्येयोऽसि ॥ १७ ॥ हे जनार्दन ! पूर्वकथितमपि स्वात्मनो योगं प्रभुत्वशक्त्यतिशमैश्वर्यं विभूतिं ध्येयविस्तारं च विस्तरेण भूयः पुनरपि कथय, हि यस्मादमृतं स्वादु तव वचनं शृण्वतो मे तृप्ति नास्ति ॥ १८ ॥

श्रीभगवानुवाच

हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।
प्राधान्यतः कुरुश्रेष्ठ ! नास्त्यन्तो विस्तरस्य मे ॥१९॥

हन्तेदानीमनुमतौ वाऽयं, या दिव्या हि प्रसिद्धा आत्मनो मम विभूतयः सन्ति ताः प्राधान्यतः प्रधानभूतां तां तां ते तव कथयिष्यामि, हे कुरुश्रेष्ठ ! यतो मे मम विभूतीनां विस्तरस्यान्तो नास्ति ॥१९॥

संक्षेपेण तावत्पृष्टं योगमैश्वर्यात्मकमाह—

अहमात्मा गुडाकेश ! सर्वभूताशयस्थितः ।
अहमादिश्च मध्यं च भूतानामन्त एव च ॥२०॥

हे गुडाकेश ! जितनिद्र ! घणकेशेति वा, अहमीश्वर एवात्मा विभुः सर्वान्तरात्माऽस्मि, तस्मादेव च सर्वेषां भूतानामाशयेऽन्तःकरणे प्रत्यगात्मारूपेण स्थितः सर्वभूताशयस्थितोऽस्मि, तस्मात् सर्व-

प्रत्यगात्मस्वरूपेणाहमेव नित्यो ध्येयोऽस्मि, तदशक्तेनाहं भूताना-मादिश्च मध्यं चान्तश्च यत् तत्कर्तृत्वेन ध्येयोऽस्मि सूर्यादिषु ॥२०॥

योगमुक्त्वा ध्येया विभूतीराह—

आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।
मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥ २१ ॥

आदित्यानां मध्ये "धाता मित्रोऽर्यमा शक्रो वरुणस्त्वंश एव च । भगो विवस्वान् पूषा च सविता दशमस्तथा ॥ एकादशस्तथा त्वष्टा द्वादशो विष्णुरुच्यते" । अत्र विष्णुः प्रधानं तदहमेव, ज्योतिषां प्रकाशकानां मध्ये, अंशुमान् रश्मिमान् रविरहमेव, मरुतां मरुद्देवानां मध्ये मरीचिनामाहं नक्षत्राणां मध्ये चन्द्रोऽस्मि ॥२१॥

वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।
इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥२२॥

वेदानां मध्ये सामवेदोऽस्मि गानेन रमणीयत्वात्, वासव इन्द्रो देवराजत्वात्, मनः सर्वेन्द्रियप्रवर्तकं, भूतानां प्राणिदेहा-दीनां मध्ये चेतना चैतन्याभिव्यञ्जिका बुद्धिवृत्तिः ज्ञानशक्तिः ॥२२॥

रुद्राणां शङ्करश्चास्मि वित्तेशो यक्षरक्षसाम् ।
वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥२३॥

"हरश्च बहुरूपश्च त्र्यम्बकश्चापराजितः । वृषाकपिश्च शम्भुश्च कपर्दी रैवतस्तथा । मृगव्याधश्च शर्वश्च कपाली च विशांपते । एकादशैते कथिता रुद्रास्त्रिभुवनेश्वराः" (हरिवंशे) । तेषां शङ्करोतीति शङ्करः, वित्तेशः कुवेरो यक्षाणां राक्षसानां मध्ये "धरो ध्रुवश्च सोमश्च अहश्चैवानिलोऽनलः । प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तित्ताः" ( महाभारते ) । अत्रानलोऽस्मि, अग्निश्च पृथिवी च

वायुश्चान्तरिक्षं चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसवः" ( बृहदा० ३।९।३१ ) इत्यत्राप्यग्निः पठितोऽस्ति, शिखरिणां शिखरवतां पर्वतानां मध्ये मेरुरहम् ॥ २३ ॥

पुरोधसां च मुख्यं मां विद्धि पार्थ ! बृहस्पतिम् ।
सेनानीनामहं स्कन्दः सरसामस्मि सागरः ॥२४॥

पुरोधसां राजपुरोहितानां धर्माध्यक्षाणां मध्ये मुख्यं प्रधानं बृहस्पतिं मां विद्धि हे पार्थ ! सेनानीनां सेनापतीनां मध्येऽहं स्कन्दो गुहोऽस्मि, सरसां स्थिरजलाशयानां समुद्रोऽस्मि ॥ २४ ॥

महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।
यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥२५॥

"ईश्वराः स्वयमुद्भूता मानसा ब्रह्मणः सुताः । यस्मान्न हन्यते मानैर्महान् परिगतः पुरः ॥ यस्मादृषन्ति ये धीरा महान्तं सर्वतो गुणैः । तस्मान्महर्षयः प्रोक्ता बुद्धेः परमदर्शिनः" ( वायुपुराणे ) । तेषां मुख्यो भृगुरहं गिरां वाचां पदानां मध्येऽहमेकमक्षरमोंकारोऽस्मि, यज्ञानां जपयज्ञो हिंसादिदोषरहितत्वेनात्यन्तशोधकोऽहमस्मि; "विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः । उपांशुः स्याच्छतगुणः सहस्रो मानसः स्मृतः ॥ ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः । सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम्" ( मनुः ) । स्थावराणां स्थितिमतां हिमालयोऽस्मि ॥ २५ ॥

अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ।
गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥२६॥

देवा एव सन्त ऋषित्वं प्राप्ता ये तेषां मध्ये नारदोऽस्मि, गन्धर्वाणां देवगायकानां चित्ररथनामास्मि, सिद्धानां जन्मनैव धर्मज्ञानादिनिरतिशयं प्राप्तानां कपिलो मुनिः ॥ २६ ॥

उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।
ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥२७॥

अमृतोद्भवममृतमथनोद्भवममृतार्थंमथनेनोद्भव उत्पत्तिर्यस्य तमुच्चैःश्रवसमश्वमश्वानां मध्ये विद्धि, इरावत्या अपत्यमैरावतमप्यमृतोद्भवं विद्धि हस्तीन्द्राणां मध्ये, नराधिपं राजानम् ॥२७॥

आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।
प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ॥२८॥

आयुधानामस्त्राणां मध्ये वज्रं तपस्विदधीच्यस्थिसम्भवमहं, धेनूनां दोग्ध्रीणां कामधुक् समुद्रमथनोद्भवा वसिष्ठस्य कामधेनुः सर्वा वा, प्रजनः प्रजनयिता शुभसन्तानार्थो विहितो यो कामः सोऽहमस्मि कामानां मध्ये न वृथारतिरूपः, सर्पाणां मध्ये तेषां राजा वासुकिः सर्पराजः ॥ २८ ॥



अनन्तश्चास्मि नागानां वरुणो यादसामहम् ।
पितॄणामर्यमा चास्मि यमः संयमतामहम् ॥२९॥

नागानां निर्विषाणां सर्पाणामनन्तः शेषः, यादसां जलदेवानां जलचराणां राजा वरुणः, पितॄणां मध्येऽर्यमा नाम पितृराजः, संयमतां नियमनकर्तॄणां यमः ॥ २९ ॥

प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।
मृगानां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥३०॥

दैत्यानां दितिवंश्यानां प्रह्लादयतीति प्रह्लादोऽस्मि, कलयतां वशीकुर्वतां गणनं कुर्वतां कालोऽस्मि, मृगानां पशूनां मध्ये मृगेन्द्रः सिंहः, वैनतेयो विनतापुत्रः गरुडः ॥ ३० ॥

पवनः पवतामस्मि रामः शस्त्रभृतामहम् ।
झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥३१॥

पवतां पावयितॄणां पवनो वायुः, शस्त्रभृतां शस्त्रधारिणां रामो रामचन्द्रः, झषाणां मत्स्यादीनां मकरोऽस्मि, स्रोतसां स्रवन्तीनां नदीनां मध्ये जाह्नवी गङ्गाऽस्मि ॥ ३१ ॥

सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ! ।
अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥३२॥

सर्गाणां सृष्टीनामादिरन्तश्च मध्यं च उत्पत्तिस्थितिप्रलया अहमेव हे अर्जुन ! भूतानां जीवाधिष्ठितानामेवादिरन्तश्चेत्युक्त-मुपक्रमे, इह तु सर्वस्य सर्गमात्रस्येति न पुनरुक्तिः, अध्यात्म-विद्या मोक्षहेतुरात्मविद्या विद्यानामस्मि प्रवदतां वादजल्पवित-ण्डानां कथानां मध्ये वादस्तत्त्वनिर्णयहेतुर्वीतरागकथात्मकोऽहं न विजिगीषु कथात्मकः ॥ ३२ ॥

अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च ।
अहमेवाक्षयः कालो धाताऽहं विश्वतोमुखः ॥३३॥

अक्षराणां वर्णानामकारोऽस्मि "अकारो वै सर्वावाक्, अकारो वासुदेवः स्या"दित्युक्तेः सामासिकस्य समाससमूहस्य च सर्व-पदार्थप्रधानो द्वन्द्वोऽस्मि, अहमेवाक्षयोऽविनाशी कालः, कालकालः कालज्ञश्चास्मि "स कालकालो गुणी सर्वविद्यः" इत्याद्युक्तेः सर्व-तोमुखः सन् कर्मफलस्य धाता सर्वेभ्यो दाता चेश्वरोऽस्मि ॥ ३३ ॥

मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् ।
कीर्त्तिः श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥३४॥

संहारकाणां मध्ये प्रलये सर्वहरो मृत्युः परमेश्वररूपोऽहं,

भविष्यतां भाविकल्याणानामुत्कर्षप्राप्तियोग्यानामुद्भव उत्कर्षस्तत्प्राप्तिहेतुश्चाहं, नारीणां मध्ये कीर्त्यादयोऽहम्, यासामाभासमात्रेणापि लोक आत्मानं कृतार्थं मन्यते, धर्मनिमित्ता ख्यातिः कीर्त्तिः, श्रीर्लक्ष्मीः शोभाकान्तिः, वाक् वाणी सर्वार्थप्रकाशिका सरस्वती, स्मृतिश्चिरानुभूतस्मरणशक्तिः, मेधा ग्रन्थार्थधारणशक्तिः, धृतिः सात्त्विकधैर्यं, क्षमा प्रसिद्धा ॥ ३४ ॥

बृहत्साम तथा साम्नां गायत्री छन्दसामहम् ।
मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ॥३५॥

साम्नां गीतिविशेषाणां बृहत्साम प्रधानगीतिविशेषः सर्वेश्वरत्वेनेन्द्रस्तुतिरूपमस्मि, छन्दसां नियताक्षरपादानामृचां गायत्रीनामर्गहम्, मार्गशीर्षः सस्यादिसम्पन्नः समशीतोष्णो मासो मासानामहं कुसुमाकरो वसन्त ऋतूनां मध्ये ॥ ३५ ॥

द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।
जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥३६॥

छलयतां वञ्चकानां सम्बन्धिद्यूतमस्मि, तेजस्विनामप्रतिहतज्ञानानामुग्रप्रभावानां तेजः प्रभावादिरहं, जेतॄणां जय उत्कर्षः, व्यवसायिनां व्यवसायो निश्चयः फलहेतुरुद्यमो वा, सत्त्ववतां सात्त्विकानां सत्त्वं धर्मज्ञानवैराग्यादि ॥ ३६ ॥

वृष्णीनां वासुदेवोऽस्मि[१] पाण्डवानां धनञ्जयः ।
मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥३७॥

मुनीनां मौनशीलानां सर्वविदां मध्ये व्यासः, कवीनां क्रान्तदर्शिनामुशना शुक्रः कविः ॥ ३७ ॥

१ वासुदेवो यथाश्वत्थे स्वदेहे चाब्रवीत्समम् । तद्वद्वेत्ति य आत्मानं समं स ब्रह्मवित्तमः । उपदेशसाहस्री प्र० १५ ॥

दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ।
मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥३८॥

दमयतां दण्डकर्तॄणां दण्डोऽदान्तदमनकरणं जिगीषतां जिगीषूणां नीतिर्न्यायोऽस्मि, गुह्यानां गोप्यानां मौनं वाचोनिग्रहस्तूष्णींभावः, ज्ञानिनामात्मज्ञानमहम् ॥ ३८ ॥

यच्चापि सर्वभूतानां बीजं तदहमर्जुन ! ।
न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥३९॥

हे अर्जुन ! यच्चापि यदपि सर्वभूतानां बीजं प्ररोहकारणं तदहमेव, प्रकरणोपसंहारार्थं विभूतिसंक्षेपमाह—न तदस्ति चराचरं भूतं वस्तु यन्मया विना स्यात्, मयाऽऽत्मना त्यक्तस्य शून्यत्वापत्तेर्मदात्मकं सर्वमिति ॥ ३९ ॥

नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप ! ।
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥४०॥

हे परन्तप ! मम दिव्यानां विभूतीनामन्त इयत्ता नास्ति तस्मात् केनापि साकल्येन ज्ञातुं वक्तुं वा न शक्यते, एष तूद्देशत एकदेशेन दिग्दर्शनरूपेण मयापि विभूतेर्विस्तरः प्रोक्तः ॥ ४० ॥

इदं त्ववधेयं कथञ्चित्साकल्येन जिज्ञासुभिरित्याह—

यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम् ॥४१॥

विभूतिमदैश्वर्यादियुक्तं यद्यत्सत्त्वं वस्तु प्राणि वा, श्रीमत् लक्ष्मीशोभादियुक्तमूर्जितं बलोत्साहादियुक्तं च तत्तत्सर्वं मम-तेजोंऽशसंभवमीश्वरस्य तेजसोंऽश एकदेशः संभवो हेतुर्यस्य तत्तेजोंऽशसंभवं त्वमवगच्छ जानीहि ॥ ४१ ॥

अवयशोविभूतिमुक्त्वा विशेषतश्चिन्तायामशक्तानुनुगृह्णन् साकल्येनाह—

अथवा बहुनैतेन किं ज्ञातेन तवार्जुन ! ।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥४२॥

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे विभूतियोगो नाम दशमोऽध्यायः ॥ १० ॥

अथवा पक्षान्तरे, बहुनैतेन बहुधोक्तेन सावशेषेणज्ञातेन तव किं स्यात्फलं हे अर्जुन ! अशेषतस्त्विममुच्यमानमर्थं शृणु, कृत्स्नमिदं जगदेकांशेनैकदेशमात्रेण विष्टभ्य विशेषतो धृत्वा'ऽव्याप्य चाहं स्थितोऽस्मि "पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि" इति मन्त्रात् ॥४२॥

विभूतिभिर्युतं ह्येकं ध्यात्वा ज्ञात्वा महेश्वरम् ।
सर्वात्मानमजं नित्यमनन्तं योगितां व्रजेत् ॥ १ ॥
यत्र स्थित्वाह भगवान् रामकृष्णादितुल्यताम् ।
विभूतिमत्सु सर्वत्र तद्रूपमैश्वरं परम् ॥ २ ॥
अव्यक्तं सर्वभावस्थं पवित्रं परमं च तत् ।
पुरुषः शाश्वतं दिव्यं निर्गुणं सगुणः स्वयम् ॥ ३ ॥
ध्येयो यथा तथा सोऽस्तु सर्वात्मा परमेश्वरः ।
ज्ञेयं तु निर्गुणं ह्येकं सर्वोपाधिविवर्जितम् ॥ ४ ॥
गीताया हृदयं चात्र स्फुटं भाति सदद्वये ।
नैव तु बहुलाकारे चित्तक्षोभविधायिनि ॥ ५ ॥
तज्ज्ञात्वा च तथा ध्यात्वा मुच्यते सर्वबन्धनात् ।
नान्यथा कोटिजन्मान्ते तथा वेदा वदन्ति वै ॥ ६ ॥

इति श्रीमत्स्वामिहनुमद्दासषट्शास्त्रिविरचितायां सारसंग्राहिकायां
टीकायां दशमोऽध्यायः ॥ १० ॥

# एकादशोऽध्यायः ( ११ )

विभूतीः सर्वाधारत्वं च भगवतः श्रुत्वा तद्दर्शनेच्छया—

अर्जुन उवाच

**मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।**
**यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥ १ ॥**

मदनुग्रहाय, मदनुग्रहार्थं परमं परमपुरुषार्थसाधनत्वादुत्कृष्टं गुह्यं गोप्यमध्यात्मसंज्ञितमध्यात्ममिति शब्दितमात्मानात्मविवेकविषयं यद्वचस्त्वयोक्तं त्वंपदार्थप्रधानमशोच्यानन्वशोचस्त्वमित्यादि, तेन वचसाऽयमनुभवसाक्षिको मोहोऽविवेकोऽभिमानादिहेतुर्मम विगतो विनष्टोऽभूत् ॥ १ ॥

तव स्वरूपविषयोऽपि मोहो विगत इत्याह—

**भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया ।**
**त्वत्तः कमलपत्राक्ष ! माहात्म्यमपि चाव्ययम् ॥ २ ॥**

हे कमलपत्राक्ष ! कमलस्य पत्रे इवाक्षिणी यस्य हे प्रभो ! त्वत्तस्त्वत्सकाशाद् भूतानां भवाप्ययौ-उत्पत्तिप्रलयौ विस्तरशो मयाश्रुतौ "अहंसर्वस्य प्रभवः" इत्यादि वचनात्, महात्मनो भावो माहात्म्यं चाव्ययमक्षयमैश्वर्यरूपं श्रुतं सर्वात्मकत्वादि ॥२॥

त्वदुक्तं सर्वं यथार्थमित्यभिनन्दन् स्वाभीष्टमाविष्करोति—

**एवमेतद्यथात्थ त्वमात्मानं परमेश्वर ! ।**
**द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ! ॥ ३ ॥**

हे परमेश्वर ! यथा येन प्रकारेण त्वमात्मानमात्थ कथयसि, एतत् तव स्वरूपमेवमेव नास्त्यत्र संशयादिः, तथापि निरूपाधिकस्य

दर्शनासंभवात्सोपाधिकमैश्वरं ज्ञानबलादियुक्तं रूपं ते द्रष्टुमिच्छामि हे पुरुषोत्तम ! ॥ ३ ॥

मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ! ।
योगेश्वर ! ततो मे त्वं दर्शयात्मानमव्ययम् ॥ ४ ॥

हे प्रभो ! नत्वाज्ञां करोमि किन्तु प्रार्थयामि, तदैश्वरं रूपं यदि मयाऽर्जुनेन द्रष्टुं शक्यं मन्यसे जानासि, ततस्तर्हि हे योगेश्वर ! योगा योगवन्तस्तेषामीश्वर ! योगीश्वर ! मे मह्यमव्ययं नित्यमात्मानं दर्शय ॥ ४ ॥

एवं प्रार्थितः सन्—

श्रीभगवानुवाच

पश्य मे पार्थ ! रूपाणि शतशोऽथ सहस्रशः ।
नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ५ ॥

हे पार्थ ! शतशोऽथ सहस्रशोऽसंख्यातानि, नानाविधानि, बहुप्रकाराणि, दिव्यानि, दिविभवान्यप्राकृतानि, नाना विलक्षणा वर्णा नीलादय आकृतयोऽवयवसंस्थानविशेषा येषां तानि नानावर्णाकृतीनि च मे मम रूपाणि पश्य ॥ ५ ॥

पश्यादित्यान्वसून्रुद्रानश्विनौ मरुतस्तथा ।
बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत ! ॥ ६ ॥

आदित्यवसुरुद्राश्विमरुद्देवान् पश्य, तथा बहून्यदृष्टपूर्वाणि पूर्वमदृष्टानि मनुष्यलोके त्वयाऽन्येन वाऽत एवाश्चर्याण्यद्भुतानि पश्य हे भारत ! ॥ ६ ॥

न केवलमेतावदेव समस्तं जगत्त्वाभीष्टं च मम देहस्थं पश्येत्याह—

इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ।
मम देहे गुडाकेश ! यच्चान्यद् द्रष्टुमिच्छसि ॥ ७ ॥

हे गुडाकेश ! इहास्मिन् मम देहे एकस्थमेकस्मिन्नवयवे स्थितं चराचरसहितं सर्वं जगदन्यच्च यज्जयादिकं स्थूलं सूक्ष्मं द्रष्टुमिच्छसि तद्भूतं भावि वाऽद्याधुनैव पश्य ॥ ७ ॥

यत्तूक्तं मन्यसे यदि तच्छक्यमिति तत्र विशेषमाह—

न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥ ८ ॥

मां विश्वरूपधरमनेन प्राकृतेन स्वचक्षुषा द्रष्टुं न शक्यसे न शक्नोषि, तस्मात्ते तुभ्यं दिव्यमप्राकृतं चक्षुर्ददामि तेन मे ममैश्वरमीश्वरस्यासाधारणं योगं शक्त्यतिशयं पश्य ॥ ८ ॥

भगवानर्जुनाय स्वरूपं दर्शितवान् स च दृष्ट्वा भगवन्तं विज्ञापितवानिति संजयो धृतराष्ट्रं प्रत्युवाच—

सञ्जय उवाच



एवमुक्त्वा ततो राजन्महायोगेश्वरो हरिः ।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९ ॥

हे राजन् ! धृतराष्ट्र ! पार्थायैवं यथोक्तप्रकारेणोक्त्वा महाञ्चासौ योगेश्वरश्च हरिः परमं रूपमैश्वरं ततो दिव्यचक्षुः प्रदानानन्तरं दर्शयामास ॥ ९ ॥

अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ १० ॥

अनेकानि वक्त्राणि मुखानि नयनानि च यस्मिंस्तदनेकवक्त्रनयनम्, अनेकान्यद्भुतानि दर्शनानि ज्ञानानि, अनेकानामद्भुतानां दर्शनं वा यस्मिंस्तदनेकाद्भुतदर्शनम्, एवमनेकानि दिव्यान्याभरणानि भूषणानि, दिव्यान्यनेकान्युद्यतान्यायुधानि च यस्मिन् रूपे तद्रूपं दर्शयामास ॥ १० ॥

दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ।
सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥११॥

दिव्यानि माल्यानि पुष्पाण्यम्बराणि वस्त्राणि च ध्रियन्ते येनेश्वरेण तं, दिव्यो गन्धो यस्य स दिव्यगन्धो दिव्यगन्धस्यानुलेपनं यस्य तं, सर्वाश्चर्यमयं सर्वाश्चर्यप्रायं सर्वतोमुखानि यस्य तममनन्तं देवं सर्वात्मकत्वात् तथाभूतं दर्शयामासार्जुनो वा ददर्शेति ॥ ११ ॥

भास उपमां कथयन् देवमित्युक्तं विवृणोति—

दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।
यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥१२॥

दिव्यन्तरिक्षे स्वर्गे वा सूर्याणां सहस्रस्यानन्तस्य युगपदुत्थितस्य युगपदुत्थिता भाः प्रभा यदि भवेत् तदा सा तस्य महात्मनो विश्वरूपस्य भासो दीप्तेः सदृशी तुल्या स्याद्यदि वा न स्यात्ततोऽपि विश्वरूपस्यैव भा अतिरिच्यत इति भावः ॥ १२ ॥

ततः किमभूदित्याकाङ्क्षायामाह—

तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥१३॥
ततः स विस्मयाविष्टो हृष्टरोमा धनञ्जयः ।
प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥१४॥

तदा दर्शनकाले देवदेवस्य तत्र तस्मिन् विश्वरूपे शरीरे, अनेकधा देवमनुष्यादिप्रकारैः प्रविभक्तमेकस्थमेकत्रस्थितं कृत्स्नं जगत् पाण्डवोऽपश्यद् दृष्टवान् ॥ १३ ॥ ततस्तद्दर्शनानन्तरं विस्मयाविष्टो विस्मयेनाविष्ट आश्चर्यबुद्धियुक्तोऽत एव हृष्टरोमा

धनञ्जयः शिरसा देवं विश्वरूपधरं प्रणम्य कृताञ्जलिर्बद्धकरपुटः सन्नभाषतोक्तवान् ॥ १४ ॥

स्वानुभवमाविष्कुर्वन्—

अर्जुन उवाच

पश्यामि देवांस्तव देव ! देहे सर्वांस्तथा भूतविशेषसङ्घान् ।
ब्रह्माणमीशं कमलासनस्थमृषींश्च सर्वानुरगांश्च दिव्यान् ॥१५॥

हे देव ! तवास्मिन् देहे सर्वान् देवान् तथा भूतविशेषाणां स्थावरजङ्गमानां संघान् समूहान् तथा कमलासनस्थं पृथिवीपद्ममध्ये मेरुकर्णिकासनस्थमीशं सर्वेषामीशितारं ब्रह्माणं तथा सर्वानृषीन् दिव्यानुरगांश्चाहं पश्यामि ॥ १५ ॥

अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्वतोऽनन्तरूपम् ।
नान्तं न मध्यं न पुनस्तवादिं पश्यामि विश्वेश्वर ! विश्वरूप ! ॥१६॥
किरीटिनं गदिनं चक्रिणं च तेजोराशिं सर्वतो दीप्तिमन्तम् ।
पश्यामि त्वां दुर्निरीक्ष्यं समन्ताद्दीप्तानलार्कद्युतिमप्रमेयम् ॥१७॥

अनेकानि बाह्वादीनि यस्य तमनन्तानि रूपाणि यस्य तं त्वां सर्वतः सर्वत्र पश्यामि, हे विश्वेश्वर ! हे विश्वरूप ! विश्वस्याद्यन्तादिसत्त्वेऽपि तव पुनरादिं मध्यमन्तं च न पश्यामि ॥ १६ ॥ किरीटं शिरोभूषणं तद्वन्तं गदाचक्रधारिणं सर्वतो दीप्तिर्यस्यास्ति तं सर्वतोदीप्तिमन्तं तेजसां राशिं पुञ्जमत एव दुर्निरीक्ष्यं दुःखेन निरीक्षणार्हं दीप्तयोरनलार्कयोर्द्युतिरिव द्युतिर्यस्य तमप्रमेयमशक्यपरिच्छेदं त्वामहं समन्तात्सर्वतः पश्यामि ॥ १७ ॥

अस्मादेव तव योगशक्तिदर्शनादनुमिनोमि—

त्वमक्षरं परमं वेदितव्यं त्वमस्य विश्वस्य परं निधानम् ।
त्वमव्ययः शाश्वतधर्मगोप्ता सनातनस्त्वं पुरुषो मतो मे ॥१८॥

मुमुक्षुभिर्वेदितव्यं ज्ञातव्यं परमं निर्गुणमक्षरमविनाशि ब्रह्म त्वमसि, तथा त्वमस्य विश्वस्य परं प्रकृष्टं निधीयतेऽस्मिन्निति निधानमाश्रयोऽसि, अत एवाव्ययो नित्यः शाश्वतस्य शश्वद्भवस्य सनातनस्य नित्यस्य धर्मस्य गोप्ता पालकः सनातनश्चिरन्तनः पुरुषो मे मतोऽभिप्रेतोऽसि त्वमिति ॥ १८ ॥

अनादिमध्यान्तमनन्तवीर्यमनन्तबाहुं शशिसूर्यनेत्रम् ।
पश्यामि त्वां दीप्तहुताशवक्त्रं स्वतेजसा विश्वमिदं तपन्तम् ॥१९॥

न विद्यत आदिर्मध्यमन्तश्च यस्यानन्तं वीर्यं प्रभावो यस्यानन्ता बाहवो यस्य शशिसूर्यौ नेत्रे यस्य दीप्तहुताशोऽग्निर्वक्त्रं यस्य तं त्वां स्वतेजसैवेदं विश्वं लोकं तपन्तं तापयन्तं पश्यामि ॥ १९ ॥

द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः ।
दृष्ट्वाद्भुतं रूपमुग्रं तवेदं लोकत्रयं प्रव्यथितं महात्मन् ॥२०॥

द्यावापृथिव्योरिदमन्तरमन्तरिक्षं त्वयैकेन व्याप्तं सर्वादिशश्च व्याप्ता अद्भुतं विस्मापकमुग्रं क्रूरं घोरं तवेदं रूपं च दृष्ट्वा लोकत्रयं प्रव्यथितं भीतं पीडितं पश्यामि हे महात्मन्! तस्मादिदं रूपमुपसंहरेति भावः ॥ २० ॥

अमी च त्वां सुरसङ्घा विशन्ति केचिद्भीताः प्राञ्जलयो गृणन्ति ।
स्वस्तीत्युक्त्वा महर्षिसिद्धसङ्घाः स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः

अमी युध्यमानाः सुरसंघा भूभारावतारायावतीर्णा मनुष्यरूपा वस्वादयस्त्वां विशन्ति प्रविशन्तो दृश्यन्ते, अमी हि त्वेति पाठे, सुरसंघा असुरसंघाश्चेति पदच्छेदभेदः, तत्र केचिद्भीताः पलायनेऽप्यशक्ताः सन्तः प्राञ्जलयो भूत्वा त्वामेव गृणन्ति स्तुवन्ति, अन्ये युद्धदर्शनार्थिनो महर्षिसिद्धसंघा उत्पातादीन्युपलभ्य विश्व-

कल्याणाय जगतः स्वस्त्यस्त्वित्युक्त्वा पुष्कलाभिः परिपूर्णार्थाभिः स्तुतिभिस्त्वामेव स्तुवन्ति ॥ २१ ॥

रुद्रादित्या वसवो ये च साध्या विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।
गन्धर्वयक्षासुरसिद्धसङ्घा वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ॥२२॥

रुद्रादयो गणदेवाः साध्या साध्यनामानो देवाः विश्वे देवा अश्विनौ देवौ उष्मपाः पितरो गन्धर्वादीनां संघाश्च विस्मिताः सन्तस्त्वां सर्वे वीक्षन्ते पश्यन्ति ॥ २२ ॥

रूपं महत्ते बहुवक्त्रनेत्रं महाबाहो ! बहुबाहूरुपादम् ।
बहूदरं बहुदंष्ट्राकरालं दृष्ट्वा लोकाः प्रव्यथितास्तथाहम् ॥२३॥

विस्मयादौ हेतुमाह—हे महाबाहो ! बहूनि वक्त्राणि नेत्राणि च यस्मिन्, बहवो बाहव उरवः पादाश्च यस्मिन्, बहून्युदराणि यस्मिन्, तत् तथा बह्वीभिर्दंष्ट्राभिः करालं विकृतमतिभयानकं ते महदतिप्रमाणं रूपं दृष्ट्वा लोका लौकिकाः प्राणिनः प्रव्यथिता भयेन प्रचलितास्तथाहमपि भयेन प्रव्यथितोऽस्मि ॥ २३ ॥

व्यथायां कारणं वदन् भयानकत्वं प्रपञ्चयति—

नभःस्पृशं दीप्तमनेकवर्णं व्यात्ताननं दीप्तविशालनेत्रम् ।
दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा धृतिं न विन्दामि शमं च विष्णो ॥

नभःस्पृशं द्युस्पृशं, दीप्तं ज्वलितं, अनेके वर्णा भयङ्करा नानासंस्थाना यस्मिन्, व्यात्तानि विवृतान्याननानि मुखानि यस्मिन्, दीप्तानि विशालानि नेत्राणि यस्मिन् त्वयि तथाभूतं त्वां दृष्ट्वा प्रव्यथितोऽन्तरात्मा मनो यस्य सोऽहं प्रव्यथितान्तरात्मा सन् धृतिं धैर्यं शमं मनस्तुष्टिं च न विन्दामि न लभे, हे विष्णो ! ॥ २४ ॥

दंष्ट्राकरालानि च ते मुखानि दृष्ट्वैव कालानलसन्निभानि ।
दिशो न जाने न लभे च शर्म प्रसीद देवेश! जगन्निवास! ॥२५॥

दंष्ट्राभिः करालानि भयङ्कराणि प्रलयकालिकाग्निभिस्तुल्यानि ते मुखानि दृष्ट्वैव दिशो विवेकेन न जाने दिङ्मूढो जातोऽस्मि तथा शर्म सुखं च न लभे, अतो हे देवेश! हे जगन्निवास! प्रसीद प्रसन्नो भव मां प्रति यथा भयाभावेन त्वद्दर्शनजं सुखं प्राप्नुयामिति ॥ २५ ॥

पराजयाशङ्का मम निवृत्तेत्याशयेनाह—

अमी च त्वां धृतराष्ट्रस्य पुत्राः सर्वे सहैवावनिपालसङ्घैः ।
भीष्मो द्रोणः सूतपुत्रस्तथासौ सहास्मदीयैरपि योधमुख्यैः ॥२६॥
वक्त्राणि ते त्वरमाणा विशन्ति दंष्ट्राकरालानि भयानकानि ।
केचिद्विलग्ना दशनान्तरेषु संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥२७॥

अमी च धृतराष्ट्रस्य सर्वे पुत्रा दुर्योधनादयो युयुत्सुव्यतिरिक्तास्त्वरमाणाः सन्तोऽवनिपालानां भूपानां संघैः सहैव तथाऽस्मदीयैरपि योधानां मुख्यैर्योधप्रधानैः सह त्वां विशन्ति, तथा महाप्रभावो भीष्मो द्रोणाऽऽचार्यस्तथाऽसौ सूतपुत्रः कर्णश्चैतेऽपि त्वरमाणास्त्वां विशन्ति, किञ्च ते सर्वे दंष्ट्राभिः करालानि भयानकानि ते तव वक्त्राणि त्वरमाणा विशन्ति, तत्र केचिच्चूर्णितैरुत्तमाङ्गैः शिरोभिर्दशनान्तरेषु भक्षितमांसमिव विलग्नाः संलग्नाः संदृश्यन्ते प्रविष्टानां मध्ये ॥ २६–२७ ॥

कथं प्रविशन्ति मुखानीत्याह—

यथा नदीनां बहवोऽम्बुवेगाः समुद्रमेवाभिमुखा द्रवन्ति ।
तथा तवामी नरलोकवीरा विशन्ति वक्त्राण्यभिविज्वलन्ति ॥२८॥

यथा नदीनां बहवोऽम्बूनां वेगाः प्रवाहाः समुद्राभिमुखाः सन्तः समुद्रमेव द्रवन्ति विशन्ति, तथाऽमी नरलोकवीरा अभितो विज्वलन्ति तव वक्त्राणि विशन्ति ॥ २८ ॥

किमर्थं कथं च प्रविशन्तीत्याह—

यथा प्रदीप्तं ज्वलनं पतङ्गा विशन्ति नाशाय समृद्धवेगाः ।
तथैव नाशाय विशन्ति लोकास्तवापि वक्त्राणि समृद्धवेगाः ॥२९॥

यथा पतङ्गाः शलभाः समृद्धवेगाः समृद्ध उद्भूतो वेगो गतिविशेषो येषां ते प्रदीप्तं ज्वलनं बुद्धिपूर्वकं नाशाय विशन्ति, तथैव समृद्धवेगा लोकास्तव वक्त्राण्यपि नाशाय विशन्ति ॥ २९ ॥

लेलिह्यसे ग्रसमानः समन्ताल्लोकान्समग्रान्वदनैर्ज्वलद्भिः ।
तेजोभिरापूर्य जगत्समग्रं भासस्तवोग्राः प्रतपन्ति विष्णो ! ॥३०॥

लोकाः प्रविशन्ति त्वं तु समन्तात् सर्वतः समग्रांल्लोकान् ज्वलद्भिर्वदनैर्ग्रसमानोऽन्तःप्रवेशयन् लेलिह्यसे आस्वादयसि, किञ्च तवोग्रा अतिक्रूरा भासो दीप्तयस्तेजोभिः समग्रं जगदापूर्य व्याप्य प्रतपन्ति सन्तापयन्ति हे विष्णो ! ॥ ३० ॥

यत एवमुग्रस्वभावोऽतः —

आख्याहि मे को भवानुग्ररूपो नमोऽस्तु ते देववर ! प्रसीद ।
विज्ञातुमिच्छामि भवन्तमाद्यं न हि प्रजानामि तव प्रवृत्तिम् ॥३१॥

उग्ररूपः क्रूराकारो भवान् क इत्याख्याहि कथय, मे मह्यं भक्ताय, ते तुभ्यं सर्वगुरवे नमोऽस्तु, हे देववर ! प्रसीद प्रसादं क्रौर्यत्यागं कुरु, आद्यमादिकारणं भवन्तं विशेषेण ज्ञातुमिच्छामि हि यस्मात्तव प्रवृत्तिं चेष्टां न जानामि ॥ ३१ ॥

एवं प्रार्थितः सन्—

श्रीभगवानुवाच

कालोऽस्मि लोकक्षयकृत्प्रवृद्धो लोकान्समाहर्तुमिह प्रवृत्तः ।
ऋतेऽपि त्वां न भविष्यन्ति सर्वे येऽवस्थिताः प्रत्यनीकेषु योधाः ॥

इहास्मिन् काले लोकान् समाहर्तुं सम्यगाहर्तुं संहर्तुं प्रवृत्तः प्रवृद्धो वृद्धिं गतो लोकक्षयकृत् कालोऽस्मि, मत्प्रवृत्तिं विना कथमेवं स्यादिति चेन्नेत्याह-ऋतेऽपि विनापि त्वां न भविष्यन्ति विनंक्ष्यन्ति सर्वे ये प्रत्यनीकेषु—अनीकमनीकं प्रति प्रत्यनीकेषु प्रतिपक्षसैन्येषु भीष्मादयो योधा योद्धारोऽवस्थिताः कालरूपेण मयाऽवश्यं तेषां विनाशात् ॥ ३२ ॥

यस्मात्त्वां विनाऽप्येते न भविष्यन्त्येव—

तस्मात्त्वमुत्तिष्ठ यशो लभस्व जित्वा शत्रून् भुङ्क्ष्व राज्यं समृद्धम् ।
मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन् ! ॥३३॥

तस्मात्त्वं युद्धायोत्तिष्ठ, अतिरथा भीष्मादयोऽनेन निर्जिता इति यशो लभस्व, शत्रून् जित्वा समृद्धमसपत्नमकण्टकं राज्यं भुङ्क्ष्व, एते तव शत्रवश्च मयैव कालरूपेण पूर्वमेव निहता निश्चयेन हताः, हे सव्यसाचिन् ! सव्येन वामेन हस्तेनापि वाणान् सचितुं संधातुं शीलमस्य स त्वं निमित्तमात्रं भव, अर्जुनेनैते निहता इति लौकिकव्यपदेशास्पदं भवेत्यर्थः ॥ ३३ ॥

द्रोणं च भीष्मं च जयद्रथं च कर्णं तथान्यानपि योधवीरान् ।
मया हतांस्त्वं जहि मा व्यथिष्ठा युध्यस्व जेतासि रणे सपत्नान् ॥३४॥

येषु येषु तवाशङ्कास्ति गुरुत्वमहाप्रभावत्वादिभिस्तान् द्रोणादीन्, तथान्यानपि योधवीरान् योधमुख्यान् मयैव कालरूपेण

हतान् त्वं जहि, मा व्यथिष्ठाः कथमेवं शक्ष्यामीति भयनिमित्तां पीडां मा गाः, शोकं मा कार्षीः, भयं त्यक्त्वा युध्यस्व, रणे सपत्नान् जेतासि ॥ ३४ ।

संजय उवाच

एतच्छ्रुत्वा वचनं केशवस्य कृताञ्जलिर्वेपमानः किरीटी ।
नमस्कृत्वा भूय एवाह कृष्णं सगद्गदं भीतभीतः प्रणम्य ॥३५॥

एतत्पूर्वोक्तं केशवस्य वचनं श्रुत्वाऽऽश्चर्यदर्शनादिना वेपमानः कम्पमानः किरीटी-अर्जुनः कृताञ्जलिः सन् कृष्णं नमस्कृत्य भीतभीतः सन् भूयः पुनः प्राणम्यात्यन्तनम्रो भूत्वा हर्षभयाद्यावेशवशान्मन्दया गद्गदया वाचा सह वर्तत इति सगद्गदं कण्ठकम्पयुक्तं यथा स्यात्तथा भूय एव पुनरपि कृष्णमाहोक्तवान् । ३५ ॥

अर्जुन उवाच

स्थाने हृषीकेश ! तव प्रकीर्त्या जगत्प्रहृष्यत्यनुरज्यते च ।
रक्षांसि भीतानि दिशो द्रवन्ति सर्वे नमस्यन्ति च सिद्धसङ्घाः॥३६॥

हे हृषीकेश ! तव प्रकीर्त्या त्वन्माहात्म्यकीर्त्तनेन श्रवणेन न केवलमहमेव प्रहृष्यामि किन्तु सर्वमेव जगच्चेतनमात्रं रक्षोविरोधि प्रहृष्यति यत्तत्स्थाने युक्तमेवेति, तथा यदनुरज्यते तद्विषयमनुरागमुपैति तदपि युक्तमेव, तथा रक्षांसि भीतानि भयाविष्टानि दिशो द्रवन्ति दिक्षु पलायन्ते, यत् सर्वे सिद्धानां संघाश्च नमस्यन्ति नमस्कुर्वन्ति यत् तच्चापि युक्तमेव, युक्ते विषये च तत्प्रहर्षादि ॥ ३६ ॥

भगवतो हर्षादिविषयत्वे हेतुमाह—

कस्माच्च ते न नमेरन् महात्मन् ! गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ।
अनन्त ! देवेश ! जगन्निवास ! त्वमक्षरं सदसत्तत्परं यत् ॥३७॥

कस्माच्च हेतोस्ते तुभ्यं सिद्धाः न नमेरन् हे महात्मन् ! परमात्मन् ! विभो ! कथंभूताय गरीयसे गुरुतराय ब्रह्मणो हिरण्यगर्भस्याप्यादिकर्त्रे-आदिकारणाय, हे अनन्त ! अपरिछिन्न ! हे देवेश ! हे जगन्निवास ! सर्वाश्रय ! यदक्षरं ब्रह्म सदसत्-यद्विद्यमानं तत्सत्कार्यं, असच्च यत्र नास्तीति बुद्धिस्तदव्यक्तं कारणं तत् त्वमेव, तत्परं ताभ्यां परं यत् तदपि त्वमेव तस्मात्सर्वे त्वां नमन्ति ॥ ३७ ॥

पुनः स्तौति—

त्वमादिदेवः पुरुषः पुराणस्त्वमस्य विश्वस्य परं निधानम् ।
वेत्तासि वेद्यं च परं च धाम त्वया ततं विश्वमनन्तरूप ! ॥३८॥

त्वमादिदेवो जगतः स्रष्टृत्वात्, पुरुषः पुरिशयनात्, पुराणोऽनादित्वात्, त्वमस्य विश्वस्य परं निधानं प्रलयादौ प्रकृष्ट आश्रयो निधीयतेऽस्मिन्निति व्युत्पत्तेः, किञ्च त्वमेव सर्वस्य वेद्यस्य वेत्ता वेदिताऽसि तथा वेद्यं चासि सर्वात्मत्वात् त्वयि सर्वस्य कल्पितत्वाच्च, त्वमेव परं धाम परमं वैष्णवं पदं मोक्षाख्यमसि, सोऽपि त्वं न तटस्थोऽसि किन्तु हे अनन्तरूप ! अपरिच्छिन्नस्वरूप ! त्वया परधाम्ना विश्वं ततं व्याप्तमस्ति ॥ ३८ ॥

सर्वदेवात्मकत्वेन स्तौति—

वायुर्यमोऽग्निर्वरुणः शशाङ्कः प्रजापतिस्त्वं प्रपितामहश्च ।
नमो नमस्तेऽस्तु सहस्रकृत्वः पुनश्च भूयोऽपि नमो नमस्ते ॥३९॥

किञ्च वाय्वादिस्त्वमसि, शशाङ्कश्चन्द्रः सूर्यादीनामप्युपलक्षणमेतत्, प्रजापतिः कश्यपादिर्हिरण्यगर्भान्तः, प्रपितामहः पितामहस्य हिरण्यगर्भस्यापि पिता "इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् । एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं

मातरिश्वानमाहुः" ॥ ( इति वेदः ), यस्मादेवं तस्मात्ते तुभ्यं नमो नमोऽस्तु, सहस्रकृत्वो बहुशः, पुनश्च भूयोऽपि पुनरपि नमो नमोऽस्तु, श्रद्धाभक्त्यतिशयेन नमस्कारेष्वलं प्रत्ययाभावोऽनया नमस्कारावृत्त्या सूच्यते ॥ ३९ ॥

**नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव सर्व ! ।**
**अनन्तवीर्यामितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः ॥४०॥**

पुरस्तात् पूर्वस्यां दिशि तत्तद्रूपेण स्थिताय ते तुभ्यं नमोऽस्तु, अथ पृष्ठतस्तुभ्यं नमोस्तु, सर्वतः सर्वासु दिक्षु स्थिताय नमः, हे सर्व ! वीर्यं शरीरसामर्थ्यं, विक्रमः पराक्रमः शस्त्रप्रयोगादिकौशलं अनन्तं वीर्यं यस्यामितो विक्रमो यस्य स त्वमनन्तवीर्यामितविक्रमः सर्वं समस्तं जगत् समाप्नोषि सम्यक् सद्रूपेणैकेन व्याप्नोसि तस्मात्सर्वोऽसि ॥ ४० ॥

एवं स्तुत्वा स्वापराधानज्ञानकृतान् क्षमापयते—

**सखेति मत्वा प्रसभं यदुक्तं हे कृष्ण ! हे यादव ! हे सखेति ।**
**अजानता महिमानं तवेदं मया प्रमादात्प्रणयेन वापि ॥४१॥**
**यच्चावहासार्थमसत्कृतोऽसि विहारशय्यासनभोजनेषु ।**
**एकोऽथवाप्यच्युत ! तत्समक्षं तत्क्षामये त्वामहमप्रमेयम् ॥४२॥**

सखा समानवया इति मत्वा ज्ञात्वा विपरीतबुद्ध्या प्रसभं प्रसह्याभिभूय हठाद् , हे कृष्णेत्यादि यदुक्तं तत्क्षमापयेति सम्बन्धः, उक्तौ कारणमाह—तवेश्वरस्येदं विश्वरूपं तव महिमानमैश्वर्यादिमाहात्म्यं चाजानता प्रमादात्–चित्तविक्षेपात् प्रणयेन स्नेहनिमित्तविश्रम्भेण वापि मया यदुक्तमिति ॥ ४१ ॥ विहारः क्रीडाव्यायामादिः, शय्या शयनं तल्पादि, आसनमास्थायिका सिंहासनादि,

भोजनमदनमेषु यदसत्कृतोऽसि सह स्थित्यादिभिः, सोऽप्यवहासार्थं परिहासाय, एकः परोक्ष एकाकी सन्नसत्कृतोऽसि—अथवा तत् समक्षं यदसत्कृतोऽसि तदसत्करणं यथा स्यात्तथा कृतोऽसि, हे अच्युत ! तत्सर्वमपराधजातं त्वामप्रमेयमहं क्षामये क्षमापयामि, क्षमस्वेति प्रार्थये ॥ ४२ ॥

अप्रमेयतामचिन्त्यप्रभावतामेव प्रपञ्चयति—

**पितासि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान् ।**
**न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव ! ॥४३॥**

अस्य चराचरस्य लोकस्य त्वं पिता जनयिताऽसि, पूज्यः पूजार्होऽसि, यतो गुरुः शास्त्राद्युपदेष्टासि तस्मात्सर्वथैव गरीयान् गुरुतरोऽसि, तस्मादेव च त्वत्समो नास्ति द्वितीयस्येश्वरस्याभावात्, त्वत्तोऽभ्यधिकोऽन्यो लोकत्रयेऽपि कुतः स्यात् सर्वथैव न सम्भवति, प्रतिमीयते यया सा प्रतिमा उपमा न विद्यते प्रतिमा यस्य सोऽप्रतिमोऽप्रतिमः प्रभावो यस्य स हे अप्रतिमप्रभाव ! "न तत्समश्चाभ्यधिकश्च दृश्यते" इति श्रुतिः ॥ ४३ ॥

**तस्मात्प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीशमीड्यम् ।**
**पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायार्हसि देव ! सोढुम् ४४**

तस्मात्प्रणम्य नमस्कृत्य कायं देहं प्रणिधाय प्रकर्षेण नीचैर्धृत्वा, ईड्यं सर्वस्तुत्यमीशं त्वामहं प्रसादये प्रसादं कारये, अतस्त्वमपि पिता पुत्रस्यापराधमिव, सखा सख्युरपराधमिव, प्रियः पतिः प्रियाया अपराधमिव मम प्रमादप्रेमविनोदकृतमपराधं सोढुमर्हसि, प्रियायार्हसीत्यत्र सन्धिरार्षः, प्रियो जगत्पतिस्त्वं प्रियाय मे सर्वं सोढुमर्हसीति श्रीरामानुजाचार्यः ॥ ४४ ॥

एवमपराधक्षमां प्रार्थ्याभीष्टं प्रार्थयते—

अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा भयेन च प्रव्यथितं मनो मे ।
तदेव मे दर्शय देव ! रूपं प्रसीद देवेश ! जगन्निवास ! ॥४५॥

अदृष्टपूर्वं मयाऽन्यैर्वा कदाचिदपि न दृष्टपूर्वं विश्वरूपं दृष्ट्वा हृषितोऽस्मि हर्षं प्राप्तोऽस्मि, अदृष्टपूर्वत्वाद् भयानकत्वाच्च भयेन मे मनः प्रव्यथितं दुःखितं च जातं, अतो हे देव ! मे मम तदेव प्राचीनं मत्सखं रूपं दर्शय, हे देवेश ! हे जगन्निवास ! प्रसीद ॥४५॥

तदेवेत्युक्तं विशदयति—

किरीटिनं गदिनं चक्रहस्तमिच्छामि त्वां द्रष्टुमहं तथैव ।
तेनैव रूपेण चतुर्भुजेन सहस्रबाहो ! भव विश्वमूर्ते ! ॥४६॥

किरीटादियुक्तं त्वामहं तथैव पूर्ववद् द्रष्टुमिच्छामि, तस्मात् हे सहस्रबाहो ! हे विश्वमूर्ते ! विश्वरूपमुपसंहृत्य तेनैव किरीटादियुक्तेन चतुर्भुजेन रूपेण युक्तो भव ॥ ४६ ॥

अर्जुनं भीतमुपलभ्योपसंहृत्य विश्वरूपं प्रियवचनेनाश्वासयन्—

श्रीभगवानुवाच

मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात् ।
तेजोमयं विश्वमनन्तमाद्यं यन्मे त्वदन्येन न दृष्टपूर्वम् ॥४७॥

किमिति बिभेषि प्रसन्नेन मया त्वय्यनुग्रहबुद्धिमता कृपयेदं परं श्रेष्ठं विश्वरूपमात्मयोगादात्मन ऐश्वर्यस्य सामर्थ्याद् दर्शितं, हे अर्जुन ! यत् तेजोमयं तेजःप्रायं विश्वं समस्तमनन्तमादौ भवमाद्यं रूपं त्वत्तोऽन्येन न दृष्टपूर्वमस्ति ॥ ४७ ॥

मम विश्वरूपदर्शनेन कृतार्थ एव त्वं सम्पन्न इत्याशयेनाह—

न वेदयज्ञाध्ययनैर्न दानैर्न च क्रियाभिर्न तपोभिरुग्रैः ।
एवंरूपः शक्य अहं नृलोके द्रष्टुं त्वदन्येन कुरुप्रवीर ! ॥४८॥

वेदानामृगादीनामध्ययनैर्यज्ञाऽध्ययनैर्वेदबोधितकर्मणां मीमांसाकल्पसूत्रादीनां कर्मविचाराणामध्ययनैर्यज्ञज्ञानैस्तथा नित्यादिदानैः क्रियाभिरग्निहोत्रादिभिस्तपोभिरुग्रैश्चान्द्रायणादिभिः, एवं रूपोऽहं त्वदन्येन नृलोके द्रष्टुं शक्यो नास्मि हे कुरुप्रवीर! यथारूपोऽहं त्वया दृष्ट इति, शक्य इत्यत्र लोप आर्षः ॥ ४८ ॥

त्वदनुग्रहार्थदर्शितेन रूपेण चेत्तव व्यथादिकमस्ति तर्हि तदेव मे रूपं पश्येत्याह—

मा ते व्यथा मा च विमूढभावो दृष्ट्वा रूपं घोरमीदृङ्ममेदम् ।
व्यपेतभीः प्रीतमनाः पुनस्त्वं तदेव मे रूपमिदं प्रपश्य ॥४९॥

ईदृङ् ममेदं घोरं भयानकं रूपं दृष्ट्वा ते तव व्यथा भयनिमित्ता पीड़ा मा भूत्, विमूढभावो व्याकुलचित्तता च मा भूत् किन्तु व्यपेतभीरपगतभयः प्रीतमनाः सन् त्वं तदेव स्वेष्टं चतुर्भुजं रूपमिदं पुनः प्रपश्य—अवलोकय ॥ ४९ ॥

तदिदं वृत्तं राज्ञे निवेदयन्—

संजय उवाच

इत्यर्जुनं वासुदेवस्तथोक्त्वा स्वकं रूपं दर्शयामास भूयः ।
आश्वासयामास च भीतमेनं भूत्वा पुनः सौम्यवपुर्महात्मा ॥५०॥

वासुदेवोऽर्जुनं प्रति-इत्येवं तथाभूतं वचनमुक्त्वा यथापूर्वमासीत् तथा स्वकं स्वकीयं रूपं दर्शयामास, भूयः पुनश्च स महात्मा सौम्यवपुर्भूत्वा भीतमेनमर्जुनं च पुनराश्वासयामास ॥५०॥

अर्जुन उवाच

दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन! ।
इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥५१॥

हे जनार्दन ! तव सौम्यं सुन्दरमनुपमिदं मानुषं नराकारं रूपं दृष्ट्वेदानीमधुना सचेताः प्रसन्नस्थिरमनाः प्रकृतिं स्वभावं स्वास्थ्यं गतः संवृत्तः संजातोऽस्मि ॥ ५१ ॥

स्वकृतस्यानुग्रहस्यातिदुर्लभत्वं दर्शयन्—

श्रीभगवानुवाच

सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।
देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥५२॥

सुष्ठु दुःखेन दर्शनमस्य तत्सुदुर्दर्शमिदं यन्ममरूपं दृष्टवानसि देवा अप्यस्य रूपस्य नित्यं सदा दर्शनकाङ्क्षिणो भवन्ति दर्शनमिच्छन्ति न तु लभन्ते ॥ ५२ ॥



तत्र हेत्वाकाङ्क्षायामाह—

नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥५३॥

यथा मां त्वं दृष्टवानसि, एवंविधोऽहं वेदैर्वेदानामध्ययनैरुग्रेण तपसा दानेनेज्यया यज्ञेन च न द्रष्टुं शक्योऽस्मि ॥ ५३ ॥

कथं तर्हि द्रष्टुं शक्य इत्यत आह—

भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ! ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ! ॥५४॥

हे अर्जुन ! अनन्ययाऽपृथगभूतया मदेकनिष्ठया भक्त्या निरतिशयप्रीत्यैवेत्येवकारार्थस्तुः, एवविधो विश्वरूपधरोऽहं ज्ञातुं शक्यः शास्त्रतः, तत्त्वेन स्वरूपतो द्रष्टुं साक्षात्कर्तुं च शक्यो भक्त्यैवाऽस्मि तथा हे परन्तप ! भक्त्यैव तत्त्वसाक्षात्कारात् तत्त्वेन तत्त्वतः प्रवेष्टुं च शक्योऽहमस्मि मोक्षं गन्तुमिति ॥ ५४ ।

अधुना सर्वस्य गीताशास्त्रस्य सारभूतोऽर्थो निःश्रेयसार्थो संक्षिप्योच्यते, भक्त्या त्विति विशेषणादन्येषामहेतुत्वशङ्कां वारयन्—

मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव! ॥५५॥

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विश्वरूपदर्शनयोगो नामैकादशोऽध्यायः ॥११॥

मदर्थं कर्म मत्कर्म मत्कर्म करोतीति मत्कर्मकृत्, तथाऽहमेव परमः प्रकृष्टः प्राप्यो न तु स्वर्गादिर्यस्य स मत्परमोऽत एव मद्भक्तः सर्वैः प्रकारैर्मद्भजनपरः सङ्गवर्जितो धनपुत्रादिषु स्नेहरहितः सर्वभूतेषु निर्वैरः कृतापराधेष्वपि शत्रुष्वपि द्वेषशून्यो यः स मामेति हे पाण्डव! ॥ ५५ ॥

सर्वात्मत्वान्महेशस्य विश्वरूपस्य दर्शनात्।
रागद्वेषादिनाशेन योगो भवति केवलः ॥ १ ॥
कालरूपेण संभीतो लब्ध्वा सौम्यं परं गुरुम्।
भक्त्या च तत्त्वतो ज्ञात्वा मुच्यते भवबन्धनात् ॥ २ ॥
निरुपाधि परं ब्रह्म पृथग् द्रष्टुं न शक्यते।
सोपाधिमीश्वरं दृष्ट्वा निर्गुणं प्रतिपद्यते ॥ ३ ॥

इति श्रीमत्स्वामिहनुमद्दासषट्शास्त्रिविरचितायां सारसंग्राहिकायां टीकायामेकादशोऽध्यायः ॥ ११ ॥

---

# द्वादशोऽध्यायः ( १२ )

पूर्वाध्यायेषु निर्विशेषस्याक्षरस्य ब्रह्मण उपासनमुक्तं सर्वयोगैश्वर्यादियुक्तस्य सविशेषस्याप्युपासनमुक्तं विश्वरूपाध्याये च वैश्वरूपमुपासनार्थं दर्शितमुक्तं च मत्कर्मकृदित्यादि—तत्र विशिष्टतरबुभुत्सया—

अर्जुन उवाच

एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १ ॥

एवं मत्कर्मकृदित्यादिरीत्या सततयुक्ता निरन्तरं तव कर्मादौ समाहिताः सन्तो ये भक्ता अनन्यशरणास्त्वां यथादर्शितं विश्वरूपं व्यक्तं सर्वज्ञमीश्वरं मायिनं पर्युपासते सततं चिन्तयन्ति ध्यायन्ति, ये चाप्यन्येऽव्यक्तमकरणगोचरमक्षरं निर्गुणमविनश्वरमेकरसं ब्रह्म पर्युपासते सर्वान्तरात्मत्वेन चिन्तयन्ति, तेषामुभयेषां मध्ये के योगवित्तमा अतिशयेन योगविदः सन्ति ॥ १ ॥

सुकरत्वेन गुणेन किं श्रेष्ठमिति प्रश्नः साक्षान्मोक्षप्रदत्वेन वेति विकल्प्य, सुशकत्वपक्षेऽर्जुनस्याधिकारमनुरुध्य तावदाह—

श्रीभगवानुवाच

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥ २ ॥

मयि सर्वज्ञे विश्वरूपे परमेश्वरे सगुणे ब्रह्मणि मनोऽन्तःकरणमावेश्य समाधाय, नित्ययुक्ता मत्कर्मकृदित्यादिरीत्या सततयुक्ताः परया प्रकृष्टया श्रद्धया चोपेताः सन्तो ये भक्ता मां सर्वज्ञं सगुणं मायिनमीश्वरमुपासते ते युक्ततमाः श्रेष्ठतमा मे मम मता अभिप्रेताः सदैकतानत्वात् ॥ २ ॥

निर्गुणोपासनस्य साक्षान्मोक्षहेतुत्वेनातिश्रैष्ठ्यं बोधयन् सुशकत्वेन सगुणोपासनस्य श्रेष्ठतां बोधयति, किं निर्गुणोपासका न योगवित्तमा इति पृष्टः —

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ ३ ॥
संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥ ४ ॥

ये त्विति तुशब्दः पूर्वेभ्यो वैलक्षण्यद्योतनाय, अक्षरं निर्विशेषं ब्रह्मानिर्देश्यं शब्दशक्त्यविषयं सर्वत्रगं विभुमचिन्त्यं मनसोऽविषयं कूटस्थं माया तत्कार्यात्मके कूटे पुञ्जेऽनृते साक्षितया वर्तमानं निर्विकारं तस्मादेवाचलं क्रियारहितं ध्रुवं नित्यं ये तु पर्युपासते श्रवणमननानन्तरं ध्यायन्ति ॥ ३ ॥ उपासनस्य प्रकारं फलं चाह—सन्नियम्येन्द्रियग्रामं विषयेभ्य उपसंहृत्येन्द्रियसमूहं, सर्वत्र सर्वदा चेष्टानिष्टविषयेषु समा रागद्वेषरहिता बुद्धिर्येषां ते समबुद्धयः सर्वेषां भूतानां हिते रताः प्रीतिमन्तो ज्ञानिनो मामेव साक्षात्प्राप्नुवन्ति कूटस्थमक्षरं ब्रह्मैव प्राप्नुवन्ति, न हि तेषु युक्ततमत्वमयुक्ततमत्वं वा वक्तव्यमस्तीति भावः ॥ ४ ॥

ननु ते यदि त्वामेव प्राप्नुवन्ति तर्हीतरेषां युक्ततमत्वोक्तिः कुत इत्यपेक्षायामाह यद्यप्येवं तथापि—

क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ ५ ॥

क्लेशेति-यद्यपि सगुणोपासकानामपि मत्कर्मपरायणतादौ क्लेशोऽधिकोऽस्त्येव तथाप्यक्षरोपासकानां देहाभिमानपरित्यागनि-

मित्तोऽधिकतरः क्लेशोऽव्यक्तासक्तचेतसामव्यक्ते करणागोचरे तत्प्राप्त्यर्थमासक्तं चेतश्चित्तं येषां तेषां भवति, हि यस्मादव्यक्ताऽक्षरात्मिका गतिर्निरालम्बपदप्राप्तिर्देहवद्भि र्देहाभिमानवद्भिर्दुःखं यथा स्यात्तथाऽवाप्यते, सगुणोपासकैस्तु सोपानारोहणन्यायेन शनैर्गतिरवाप्यते तस्मात्सुकरत्वेन सगुणमुपासनं श्रेष्ठमस्ति ॥ ५ ॥

सगुणोपासकानां क्लेशमन्तरेणैवेश्वरप्रसादेन शीघ्रं निर्गुणब्रह्मप्राप्तिमाह—

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ ६ ॥
तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात् ।
भवामि न चिरात्पार्थ ! मय्यावेशितचेतसाम् ॥ ७ ॥

ये तु सगुणोपासकाः सर्वाणि कर्माणि मयीश्वरे संन्यस्य समर्प्य मत्परा अहं परो येषां परमेश्वर एव परप्रीतिविषयो ध्येयो येषां तेऽनन्येन न विद्यतेऽन्यदालम्बनं विश्वरूपदेवाद्यस्य तेन योगेन समाधिना मामीश्वरं ध्यायन्तश्चिन्तयन्त उपासते ॥ ६ ॥ तेषां मय्यावेशितचेतसां समाहितचित्तानां मृत्युसंसारसागरात्—मृत्युयुक्तः संसारः सागर इव दुरुत्तरत्वात् तस्मान्न चिरात् किन्तु शीघ्रमेवाहं समुद्धर्त्ता भवामि हे पार्थ ! अनन्यभक्त्या तुष्टो बुद्धियोगं दत्वा समूलात्संसारादुद्धरामि, तदुक्तं—"ददामि बुद्धियोगं तं येन मामुपयान्ति ते" ॥ ७ ॥

यत एवं तस्मात्—

मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥ ८ ॥

अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।
अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय ! ॥ ९ ॥

मय्येव विश्वरूपे सगुणेश्वरे मन आधत्स्व स्थापय, मय्येव च बुद्धिं निश्चयात्मिकां निवेशय, बुद्ध्या मां चिन्तय, तेनात ऊर्ध्वं शरीरपातादनन्तरं लब्धज्ञानः सन् मयि ब्रह्मण्येव मदात्मना निवसिष्यसि निवत्स्यसि, संशयोऽत्रार्थे नास्ति ॥ ८ ॥ अथ यदि त्वमेवं स्थिरमचलं यथा स्यात्तथा मयि चित्तं समाधातुं स्थापयितुं न शक्नोषि चेत्ततस्तर्हि तत्पश्चादभ्यासयोगेन चित्तस्यैकस्मिन्नालम्बने सर्वतः समाहृत्य स्थापनेन पुनः पुनर्मत्स्मरणेन मां विश्वरूपमीश्वरमाप्तुमिच्छ प्राप्तुं प्रार्थयस्व हे धनञ्जय ! ॥ ९ ॥

अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ।
मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि ॥ १० ॥
अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥ ११॥

अभ्यासेऽप्यसमर्थोऽसि तर्हि मदर्थकर्मपरमो मदर्थं यत्कर्म तत्परमस्तत्प्रधानो मत्प्रीत्यर्थ एव श्रवणकीर्त्तनादिकर्मकर्त्ता भव, मदर्थमपि केवलं कर्माणि कुर्वन् सिद्धिं मोक्षं सत्त्वशुद्धियोगज्ञानद्वारा प्राप्स्यसि ॥१०॥ अथ बहिर्विषयाकृष्टचित्तत्वादेतदपि कर्तुमशक्तोसि ततस्तदनन्तरं मद्योगमाश्रितो मदेकशरणत्वमाश्रितः, सर्वाणि कर्माणि मयि संन्यस्य तेषामनुष्ठानं मद्योगस्तदाश्रितो यतात्मवान् संयतचित्तः सन् सर्वकर्मफलत्यागं कुरु फलाभिसन्धिं त्यजेत्यर्थः ॥११॥

इदानीमवश्यकर्तव्यतायै सर्वकर्मफलत्यागं स्तौति—

श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते ।
ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥१२॥

अविवेकपूर्वकादभ्यासाज्ज्ञानं शास्त्रजन्यं श्रेयः श्रेष्ठं, तस्मात्केवलाज्ज्ञानाज्ज्ञानपूर्वकं ध्यानं श्रेयो ज्ञानवतो ध्यानादपि कर्मफलत्यागो विशिष्यते, एवं मद्योगमाश्रितस्यात्मवतः सर्वकर्मफलत्यागात्सहेतुकस्य संसारस्य शान्तिरुपशमोऽनन्तरमेव स्यान्नतु कालान्तरमपेक्षते, अत्र पूर्वपूर्वाशक्तं प्रति परपरविधानात्सर्वकर्मफलत्यागस्य स्तुतिः प्रतिभाति, कामत्यागादमृतत्वं प्रसिद्धं तच्च कामत्यागत्वं कर्मफलकामत्यागेऽपि तुल्यं वर्तते तस्मात्स्तुतिः ॥१२॥

ज्ञानिनामद्वेष्टृत्वादिधर्मसमुदायः साक्षान्मोक्षसाधनं वक्तुकाम आह—

अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च।
निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥ १३ ॥
सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥ १४ ॥

कर्मफलत्यागादिना लब्धस्वात्मानुभवो यो ज्ञानी सर्वत्रात्मदर्शित्वात्सर्वभूतानामद्वेष्टा द्वेषकर्तृष्वपि द्वेषवर्जितो मित्रतया वर्तत इति मैत्रो दुःखितेषु करुणो दयावान्, निर्ममो देहादावपि ममत्वशून्यो, निरहङ्कारो गुणविद्याद्यहङ्काररहितः समदुःखसुखः समे दुःखसुखे यस्य स क्षमी क्षमावान् च ॥ १३ ॥ लाभालाभादौ सततं नित्यं सन्तुष्टः सततं योगी समाहितचित्तः सततं यतात्मा संयतकार्यकरणसंघातः सततं दृढनिश्चयः स्थिराऽध्यवसायः स्थितप्रज्ञः सततं मय्यर्पिते मनोबुद्धी यस्य स मद्भक्तो मे प्रियो ज्ञानीत्यर्थः "स च मम प्रियः" इत्युक्तेः ॥ १४ ॥

यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥१५॥

यस्मात्तत्त्वविदो हेतोर्लोकः सर्वो जनो नोद्विजते–उद्वेगं सन्तापं क्षोभं न प्राप्नोति, यश्च स्वयमपि लोकान्नोद्विजते, अत एव हर्षाऽऽमर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः, इष्टलाभजहर्षेष्टप्रतिघातजामर्षासहिष्णुता व्याघ्रादिदर्शनादिजन्यभयरोगादिजन्योद्वेगै रहितो भवति ज्ञानी सर्वात्मदर्शित्वकारुणिकत्वादिभिः स्वभावविशेषैः स सर्वात्मनो हरेः प्रियो भवत्येव ॥ १५ ॥

अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।
सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥ १६ ॥

अनपेक्षो भोगोपकरणेषु निःस्पृहः शुचिर्बाह्याभ्यन्तरशौचसम्पन्नो दक्षोऽनलसः प्रत्युत्पन्नेषु कार्येषु यथावज्ज्ञातुं कर्तुं च कुशलः, उदासीनो निष्पक्षपातः, अतो गतव्यथो गतभयः, आरभ्यन्त इत्यारम्भाः काम्यानि कर्माणि तानि सर्वाणि परित्यक्तुं शीलं यस्य स सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥ १६ ॥

यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।
शुभाशुभपरित्यागी भक्तिमान् यः स मे प्रियः ॥१७॥

इष्टप्राप्तौ यो न हृष्यति, अनिष्टप्राप्तौ न द्वेष्टि प्रियवियोगे न शोचति, अप्राप्तं न काङ्क्षति शुभाशुभे पुण्यपापे कर्मणी परित्यक्तुं शीलं यस्य स भक्तिमान् मे प्रियः ॥ १७ ॥

समः शत्रौ च मित्रे च तथा मानापमानयोः ।
शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥ १८ ॥

तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येन केनचित् ।
अनिकेतः स्थिरमतिर्भक्तिमान् मे प्रियो नरः ॥ १९ ॥

शत्रुमित्रादिषु सर्वत्र समः सुखदुःखादिरहितो यतोऽयं सङ्ग-

विवर्जितः सङ्गेन संसर्गेण विवर्जितः सर्वाध्यासशून्यः ॥ १८ ॥
तुल्ये निन्दास्तुती यस्य स तुल्यनिन्दास्तुतिस्तत्रापि हर्षादिरहितो मौनी संयतवाक्, येन केनचिच्छरीरस्थितिमात्रेण सन्तुष्टः, तथा च स्मृतिः "येन केनचिदाच्छन्नो येन केनचिदाशितः। यत्र क्वचनशायी स्यात्तं देवा ब्राह्मणं विदुः" ॥ अनिकेतोऽनियतागारः, स्थिरमतिः स्थिरा परमार्थविषया मतिर्यस्य स भक्तिमान् नरो मे प्रियः ॥१९॥

अद्वेष्टेत्यादिना परमार्थविदामक्षरोपासकानां स्वभावसिद्धं धर्मजातमुक्तं, यथोक्तं वार्तिके "उत्पन्नात्मावबोधस्य ह्यद्वेष्टृत्वादयो गुणाः। अयत्नतो भवन्त्येव न तु साधनरूपिणः" ॥ एतदेव च स्थितप्रज्ञलक्षणं मुमुक्षुभिर्यत्नतः सम्पादनीयमुपसंहरति—

ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥ २० ॥

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे भक्तियोगो नाम द्वादशोऽध्यायः ॥ १२ ॥

धर्मादनपेतं धर्म्यं च तदमृतं च धर्म्यामृतममृतत्वहेतुत्वादिदमद्वेष्टेत्यादिना प्रतिपादितं यथोक्तं ये ज्ञानिनः पर्युपासतेऽनुतिष्ठन्ति श्रद्दधाना मत्परमा अहमक्षरात्मा परमो निरतिशयो येषां ते भक्ता विज्ञा मेऽतीवात्यन्तं प्रिया ममात्मत्वादिति, तस्मादिदं धर्म्यामृतं यत्नतो मुमुक्षुभिरनुष्ठेयमिति ॥ २० ॥

सगुणस्यागुणस्यैषा ब्रह्मणो भक्तिरुत्तमा।
यथाधिकारमभ्यस्ता योगो भवति मोक्षदः ॥ १ ॥

इति श्रीमत्स्वामिहनुमद्दासषट्शास्त्रिविरचितायां सारसंग्राहिकायां टीकायां द्वादशोऽध्यायः ॥ १२ ॥

---

# त्रयोदशोऽध्यायः (१३)

षट्कद्वयेन त्वंपदार्थं तत्पदार्थं च प्रतिपाद्य वाक्यार्थप्रतिपादनाय तृतीयषट्कमारभ्यते, तत्र सप्तमाध्याये त्रिगुणात्मिकाऽपरा जीवरूपा चान्या प्रकृतिरुक्ता याभ्यामीश्वरो जगदुत्पत्त्यादिहेतुत्वं प्रतिपद्यते, अत्रोक्तक्षेत्रक्षेत्रज्ञलक्षणप्रकृतिद्वयनिरूपणद्वारेण तद्वत ईश्वरस्य तत्त्वनिर्णयार्थमयमध्याय आरभ्यते, द्वादशाध्याये चाद्वेष्टृत्वादि तत्त्वज्ञविशेषणान्युक्तानि, ते तत्त्वज्ञा यादृशेन ज्ञानेन सम्पन्ना हरिप्रिया भवन्ति तस्यापि निर्णयार्थं चायमध्यायः—

श्रीभगवानुवाच

इदं शरीरं कौन्तेय ! क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥ १ ॥

हे कौन्तेय ! इदं प्रत्यक्षं भोगायतनं शरीरं प्रकृतेः परिणामभूतं संघातात्मकं विनश्वरं देहं क्षेत्रमिति क्षतात्पुनः पुनरिदं त्रायते तस्मात् क्षीयते क्षरत्यपक्षीयते तस्मात् क्षेत्रवदस्मिन् कर्मफलं निष्पद्यते तस्माद्वा क्षेत्रमित्येवमभिधीयते कथ्यते, एतत् क्षेत्रं यो वेत्ति स्वाभाविकेनाहं मनुष्य इत्यादि, औपदेशिकेन वा ज्ञानेन ममेदं नाहमेतदात्मक इत्यादि तं ज्ञातारं तद्विदः क्षेत्रज्ञविदः क्षेत्रज्ञ इत्येवं प्राहुः क्षेत्रज्ञशब्देन तं कथयन्तीत्यर्थः ॥ १ ॥

एवं दृश्यानामनात्मत्वसिद्धये विवेकमुक्त्वा पारमार्थिकेन रूपेण परमात्मनैक्यमाह ज्ञानेन ज्ञातव्यं नैतावानेवेति दर्शयन्—

क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ! ।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ २ ॥

हे भारत ! सर्वक्षेत्रेषु देहेषु क्षेत्रज्ञं च दृश्यात् क्षेत्राद् विलक्षणं

च मां परमेश्वरमसंसारिणमेव विद्धि, क्षेत्रज्ञं मद्भिन्नं विद्धीत्यर्थोऽप्येवार्थे, अथवा क्षेत्रज्ञं क्षेत्रमपि च मां विद्धि सर्वात्मकत्वान्मम, भेदस्य मायिकत्वेन मिथ्यात्वात्, जीवानामीश्वरस्य चोपाधिभेदेन भेदप्रतिभासनादित्यादि, एवं क्षेत्रक्षेत्रज्ञयोर्ज्ञाने सति ज्ञातव्यं नावशिष्यते तस्मात् क्षेत्रक्षेत्रज्ञयोर्यज्ज्ञानं तज्ज्ञानं मम मतमभिप्रेतमस्ति, क्षेत्रक्षेत्रज्ञेश्वरयाथात्म्यव्यतिरेकेण ज्ञेयाभावात् क्षेत्रज्ञस्य परमात्मस्वरूपत्वेन ज्ञाने जगन्मायामात्रमवशिष्यते ज्ञातव्यान्तराभावात्तत्त्वज्ञः कृतकृत्यो भवतीति भावः ॥ २ ॥

विवरणार्थमुपदिष्टस्य क्षेत्राध्यायार्थस्य संग्रहमाह—

तत्क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत् ।
स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥ ३ ॥

तत् पूर्वोक्तं शरीरात्मकं क्षेत्रं यत् स्वरूपतो जडं, यादृक् स्वधर्मैर्यत्प्रकारकं च यद्विकारि ये विकारा अस्य तच्च, यतश्च कारणाद्यत् कार्यमुत्पद्यते, स च क्षेत्रज्ञो यो निर्दिष्टः स्वरूपतो यत्प्रभावश्च ये प्रभावा उपाधिकृतशक्तयो यस्य सः, तत् क्षेत्रक्षेत्रज्ञयोर्याथात्म्यं समासेन संक्षेपेण मे मम वाक्याच्छृणु श्रुत्वाऽवधारयेत्यर्थः ॥ ३ ॥

श्रोतृप्ररोचनाय क्षेत्रक्षेत्रज्ञयाथात्म्यं स्तौति—

ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ ४ ॥

ऋषिभिर्वसिष्ठादिभिर्वासिष्ठादौ बहुधा बहुप्रकारैर्गीतं कथितं छन्दोभिर्मन्त्रच्छन्दैर्ऋगादिभिर्विविधैः शाखादिभेदेन बहुप्रकारैः पृथग् विवेकतो गीतं, ब्रह्मणः सूचकानि वाक्यानि ब्रह्मसूत्राणि तैश्च पद्यते गम्यते ब्रह्मेति तानि पदानि तैर्ब्रह्मसूत्रपदै-

हेतुमद्भिर्युक्तियुक्तैर्विनिश्चितैरुपक्रमादिभिर्निश्चितप्रत्ययोत्पादकैर्गीतं "सदेव सोम्येदमग्र आसीत्, आत्मेत्येवोपासीत" इत्यादि, क्षेत्रक्षेत्रज्ञयाथात्म्यं तत् समासेन मे शृणु तथा "अथातो ब्रह्मजिज्ञासा, इत्यादिरूपैर्ब्रह्मसूत्रपदैर्हेतुमद्भिर्विनिश्चितैर्गीतं शृणु ॥ ४ ॥

स्तुत्याऽभिमुखाय यथोद्देशं क्षेत्रं निर्दिशति—

महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥ ५ ॥

सर्वविकारेषु व्यापकत्वान्महान्ति च तानि भूतानि च सूक्ष्माणि महाभूतानि स्थूलानामिन्द्रियगोचरत्वेन वक्ष्यमाणत्वात्, अहंप्रत्ययलक्षणोऽहङ्कारो महाभूतकारणं, तत्करणं बुद्धिरध्यवसायलक्षणा, तत्कारणमव्यक्तमीश्वरशक्तिर्मायादुरत्यया, एव शब्दोऽवधारणार्थं एतावत्येवाष्टधा भिन्ना प्रकृतिः, चकारो मूलप्रकृत्या सहान्येषां समुच्चयार्थः, इन्द्रियाणि कर्मेन्द्रियाणि पञ्च ज्ञानेन्द्रियाणि पञ्चेति दशैकं च मनः, पञ्च चेन्द्रियगोचरा विषयाः शब्दादियुक्तानि स्थूलभूतानि, तान्येतानि "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकस्तु विकारः" इति वादिनश्चतुर्विंशतितत्त्वान्याचक्षते ॥ ५ ॥

एवं क्षेत्रस्वरूपनिर्देशेनैव यच्च यादृक् चेति व्याख्यायेच्छादीनामात्मधर्मत्वनिवृत्तये क्षेत्रविकारत्वनिरूपणेन यद्विकारीति व्याचष्टे—

इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ।
एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ६ ॥

इच्छा सुखे तत्साधने च स्पृहा, द्वेषो दुःखे तत्साधने च स्पृहाविरोधिनी चित्तवृत्तिः, अनुकूलप्रतिकूलात्मके सुखदुःखे प्रसिद्धे चित्तवृत्तिरूपे धर्माधर्मसाधारणकारणके, सङ्घातः सेन्द्रियं शरीरं, तस्मि-

अभिव्यक्तान्तःकरणवृत्तिरात्मचैतन्यानुभासाऽनुविद्धा चेतना, अवसन्नदेहादिधारणहेतुर्धृतिर्धैर्यं, इच्छादीनां ग्रहणं सर्वान्तःकरणधर्माणामुपलक्षणं, तथा च श्रुतिः "कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" ज्ञेयत्वेनैतत्सर्वं क्षेत्रं जडं सविकारं विकारेण महदादिनेच्छादिना जन्मादिना च सहोदाहृतं संक्षेपेण कथितम् ॥ ६ ॥

सप्रभावं क्षेत्रज्ञं ( ज्ञेयं यत्तद् ) इत्यादिना निरूपयितुं ज्ञानयोग्यत्वाय ज्ञानसाधनानि तावज्ज्ञानत्वेन वर्णयति—

अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ ७ ॥
इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ८ ॥
असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ ९ ॥
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥१०॥
अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥११॥

गुणैरात्मश्लाघनाभावोऽमानित्वं, लोकवञ्चनार्थधर्मानुष्ठानकथनरहितत्वमदम्भित्वं, कायादिभिः प्राणिनामपीडनमहिंसा, परापकारसहिष्णुत्वं क्षान्तिः, अकौटिल्यमार्जवं, आचार्यस्य सद्गुरोः कायादिभिः सेवनमाचार्योपासनं, बाह्याभ्यन्तरमलानां तत्तत्साधनैस्त्यागः शौचं, विघ्नेऽपि मोक्षमार्गयत्नतत्परता स्थै-

यं, कुमार्गान्निरुध्य देहेन्द्रियसङ्घातस्य सुमार्गे स्थापनमात्मविनिग्रहः ॥७॥ दृष्टादृष्टेष्टेष्विन्द्रियार्थेषु शब्दादिषु रागाभावो वैराग्यं, उत्तमत्वादिगर्वाभावोऽनहङ्कारः, जन्मादिदुःखान्तेषु प्रत्येकं दोषाणामनुदर्शनमालोचनं यद्वा जन्मादिव्याध्यन्तेषु दुःखान्येव दोषास्तेषामनुदर्शनं, दुःखं दैहिकादितापः ॥ ८ ॥ पुत्रस्त्रीगृहदासादिष्वसक्तिर्ममत्वप्रेमत्यागः, अनभिष्वङ्गस्तादात्म्याध्यासाभावोऽनासक्तिः, इष्टानिष्टानां चोपपत्तिषु प्राप्तिषु नित्यं सदा समचित्तत्वम् ॥ ९ ॥ मयि चेश्वरेऽनन्ययोगेनानन्यसमाधिना भगवानेव मे गतिर्नान्य इति निश्चयेनाव्यभिचारिणी सदाऽचला भक्तिः विविक्तदेशसेवित्वमशुच्यादिभिः सर्पव्याघ्रादिभिश्च रहितं देशं सेवितुं शीलत्वं, जनानां प्राकृतानामविनीतानां संसत्समवायस्तत्रारतिरप्रीतिर्न तु विनीतानां तस्या ज्ञानोपकारकत्वात् ॥ १० ॥ अध्यात्मज्ञानमात्मानमधिकृत्य प्रवृत्तमात्मानात्मविवेकज्ञानं तस्मिन्नित्यत्वं निष्ठावत्त्वमध्यात्मज्ञाननित्यत्वममानित्वादीनां यत्नसाधितानां परिपाकजन्यमात्मतत्त्वज्ञानं भवति तस्य योऽर्थः प्रयोजनं फलं मोक्षस्तस्य दर्शनमालोचनं तत्त्वज्ञानार्थदर्शनमविद्यातत्कार्यसंसर्गरहिताविनाश्यानन्दघनत्वादेश्चिन्तनमेतत्सर्वं ज्ञानमिति प्रोक्तं ज्ञानार्थत्वात्, यदतोऽन्यथाऽस्माद्विपरीतं मानित्वादिकं तदज्ञानमिति प्रोक्तं ज्ञानविरोधित्वात् संसारहेतुत्वात्तस्मात्त्याज्यमेवामानित्वादिकमेवोपादेयमिति ॥ ११ ॥

यथोक्तेन ज्ञानसाधनेन ज्ञातव्यं किमित्याकाङ्क्षायामाह—

ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते ।
अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥ १२ ॥

यत् क्षेत्रज्ञं ज्ञेयमुक्तसाधनैस्तत्प्रकर्षेण वक्ष्यामि यद् वक्ष्यमाणं

ज्ञेयं ज्ञात्वाऽमृतमश्नुते मुक्तो भवति पुनर्न म्रियते, किं तदित्यत आह–अनादिमत्–आदिरुत्पत्तिः कारणं यस्यास्ति तदादिमत्, न आदिमदनादिमत् परं निरतिशयं ब्रह्म ज्ञेयमित्यर्थः, तद्ब्रह्म सत् कार्यं सच्छब्दवाच्यं वाऽसत् कारणमव्यक्तमसच्छब्दवाच्यं वा नोच्यते जातिगुणक्रियासम्बन्धादिसर्वविशेषरहितत्वात्स्वप्रकाशत्वाद् वाचामविषयत्वाद् ब्रह्माकारवृत्तेरज्ञानमात्रापसारकत्वान्नैव ज्ञेयं ब्रह्म विधिनिषेधमुखप्रमाणविषयो भवतीति, अथवा–अनादि उत्पत्त्यादिरहितं मत्त ईश्वरात्सगुणात्सदादिशब्दवाच्यान्मायिनः परं भिन्नमुत्कृष्टं, यद्यपि "मत्तः परतरं नान्यद्" इत्युक्तं तथापि तत्र परतरत्वं निषिद्धमत्र च परत्वं विधीयते तस्मान्नास्ति विरोधः, यस्माच्च मत्तः परं तस्मादेव सदसदादिशब्दशक्त्या नोच्यते, ईश्वरस्तु सर्वज्ञत्वादिविशेषधर्मवत्त्वात्कारणत्वात्सदादिशब्दवाच्यो भवत्येवेति भावः, अष्टमाध्याये च यथा ब्रह्मणोऽधियज्ञस्य विष्णोर्भेदो वर्णितस्तथाऽत्र काल्पनिको भेदो मन्तव्य एवेति च ॥ १२ ॥

सच्छब्दप्रत्ययाविषयत्वादसत्त्वशङ्कायां ज्ञेयस्य सर्वप्राणिकरणोपाधिद्वारेण तदस्तित्वं प्रतिपादयंस्तदाशङ्कानिवृत्त्यर्थमाह तत्प्रभावम्—

सर्वतःपाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।
सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १३ ॥

सर्वतः पाणयो हस्ताः पादाश्च यस्य तत्सर्वतःपाणिपादं ज्ञेयं ब्रह्म, यद्यपि हस्तादयो देहस्थास्तथापि तत्प्रवृत्त्या चेतनं ज्ञेयं लक्ष्यते, चेतन एव क्षेत्रोपाधितः क्षेत्रज्ञ इत्युच्यते, क्षेत्राणां च मायिकत्वेन मिथ्यात्वात्तदपनयनेन ज्ञेयत्वमुक्तं तत्सत्त्व एव च पाणिपादप्रवृत्तिर्भवति तस्मात्सर्वतःपाणिपादं तदुच्यते, तथा सर्वतोऽक्षीणि शिरांसि मुखानि च प्रवर्तनीयानि यस्य तत्सर्वतोऽक्षिशिरोमुखं सर्वतः

सर्वत्र श्रुतिः श्रवणेन्द्रियं यस्य तत्सर्वतःश्रुतिमत्, लोके प्राणिसमुदाये सर्वं चराचरं व्याप्यैकमेव निर्विकारं क्षेत्रज्ञरूपं ज्ञेयं तिष्ठति, अध्यारोपोऽयं बोधार्थः, यथेश्वरस्य क्षेत्रज्ञाज्जीवात्परत्वेऽपि पारमार्थिकेन रूपेण क्षेत्रज्ञत्वमभिहितं तथेश्वरात्परस्यापि निर्गुणस्य ब्रह्मणः पाणिपादादिक्षेत्रोपाधिकक्षेत्रज्ञात्मत्वमभिहितमिति तत्त्वम् ॥ १३ ॥

"अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते" इति न्यायमनुसृत्य पाणिपादाद्यध्यारोपणाज्ज्ञेयस्य तद्वत्ताशङ्का मा भूदित्यपवादमाह—

सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १४ ॥

बाह्याभ्यन्तरसर्वेन्द्रियाणां गुणैरध्यवसायसङ्कल्पश्रवणादिभिरवभासते तज्ज्ञेयं ब्रह्मेति सर्वेन्द्रियगुणाभासं सर्वेन्द्रियव्यापारैर्व्यापृतमिव भवति वस्तुतः सर्वेन्द्रियविवर्जितं सर्वकरणरहितमस्ति, तस्मादसक्तं सर्वसङ्गवर्जितं तथापि सर्वभृच्चैव सत्तामात्रेण सर्वपोषकं सर्वधारकं चैव स्वरूपतो निर्गुणं सत्त्वादिरहितं तथापि मायया गुणभोक्तृ च गुणप्रकाशकं गुणानामुपलब्धृ च तज्ज्ञेयं ब्रह्म । "ध्यायतीव" इत्यादिश्रुतेः । "स सर्वधीवृत्त्यनुभूतसर्व आत्मा यथा स्वप्नजनेक्षितैकः । तं सत्यमानन्दनिधिं भजेत नान्यत्र सज्जेद्यत आत्मपातः" ॥ इति ( श्रीमद्भागवते स्क० २।१।३९ ) ॥ १४ ॥

बहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥ १५ ॥
अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १६ ॥

भूतानां भवनधर्मकाणां देहादीनां बहिरन्तश्च तद् ब्रह्म वर्तते बहिर्विषयप्रकाशकत्वेनान्तश्च प्रत्यगात्मत्वेनेत्यर्थः, अचरं स्थावरं चरं जङ्गमं च तदेव सर्वत्र सत्स्वरूपत्वात् सर्वाधिष्ठानत्वात्, तथापि सूक्ष्मत्वात्स्वेन स्वरूपेण ज्ञेयमप्यविदुषामविज्ञेयं तत्, तथाऽविदुषाऽज्ञाततया तद् दूरं विदुषामात्मतयाऽन्तिके च तत्, "दूरात्सुदूरे तदिहान्तिके च पश्यत्स्विहैव निहितं गुहायाम्" इत्यादिश्रुतेः ॥ १५ ॥ "एकमेवाद्वितीयमि"त्यादिश्रुतेर्भूतेषु देहेष्वविभक्तमभिन्नमेकमेव तद् विभक्तं भिन्नमिव च स्थितमस्ति देहेष्वेव विभाव्यमानत्वात्, स्थितिकाले भूतभर्तृ भूतानां भर्तृ पोषकं प्रलयकाले ग्रसिष्णु ग्रसनशीलमुत्पत्तिकाले प्रभविष्णु प्रभवनशीलं तज्ज्ञेयं ब्रह्म तस्मात् सर्वकारणमपि तत् कल्पितसर्पादे रज्जुरिव ॥ १६ ॥

सर्वत्र विद्यमानमपि सन्नोपलभ्यते चेज्ज्ञेयं तर्हि तत्तम इति भ्रमनिवृत्त्यर्थमाह—

ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥ १७ ॥

तज्ज्ञेयं ब्रह्म ज्योतिषामादित्यादीनां बुद्ध्यादीनां च ज्योतिरवभासकमस्ति "येन सूर्यस्तपति तेजसेद्धः तस्य भासा सर्वमिदं विभाति" इत्यादि श्रुतेः । तमसोऽज्ञानात्तत्कार्याच्च परमस्पृष्टं तदुच्यते "आदित्यवर्णं तमसः परस्तात्" इत्यादिश्रुतिभिः । तमःपरज्योतिःस्वरूपत्वादेव तज्ज्ञानं प्रमाणजवृत्त्यभिव्यक्तसंविद्रूपम्, ज्ञायतेऽनेनेति ज्ञानममानित्वादि, ज्ञेयं ज्ञातुमर्हमपि तदेव परं ब्रह्म यज्ज्ञेयं वक्ष्यामीत्युक्तं .जडस्याज्ञातत्वाभावेन ज्ञातुमनर्हत्वात्, ज्ञानगम्यं ज्ञेयमेव सर्वज्ञानात्मकं सदपि सर्वैर्ज्ञेयं न भवति किन्त्वमानित्वादिरूपेण ज्ञानेन तद्वतैव गम्यं प्राप्यं भवति ज्ञानफलमेत-

त्सर्वं सर्वस्य हृदि बुद्धौ विष्ठितं विशेषेण स्थितं तत्रैव त्रयं विभाव्यतेऽतो नाप्राप्यं तमो रूपं वा तत् ॥ १७ ॥

उक्तं क्षेत्रादिकमधिकारिणं फलं च वदन्नुपसंहरति—

इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ १८ ॥

इत्येवं पूर्वोक्तप्रकारेण क्षेत्रं ज्ञानं ज्ञेयं च "ज्ञेयं यत्तदित्यादि तमसः परमित्यन्तम्" समासतः संक्षेपत उक्तमेतावानेव हि वेदार्थोऽपि, मद्भक्त ईश्वरभक्तः श्रवणादिपरायण एतत् क्षेत्रादिकं सर्ववेदार्थभूतं सर्वगीतार्थभूतं विज्ञाय विवेकेन विदित्वा मद्भावाय परमात्मभावाय मोक्षायोपपद्यते योग्यो भवति ॥ १८ ॥

सप्तमे द्वे प्रकृती उपन्यस्यैतद्योनीनि भूतानीति चोक्तं प्रकृतिद्वयनिरूपणार्थेऽस्मिन्नध्याये कथं तद्योनित्वमिति प्रतिपादयति येन प्रतिज्ञातं यद्विकारि यतश्च यदित्यपि दर्शितं भविष्यति—

प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥ १९ ॥

ईश्वरस्य प्रकृतिं मायां पुरुषं जीवं चोभावपि चेश्वरस्य प्रकृती अनादी विद्धि परमेश्वरस्यानादित्वान्नित्यत्वाच्च तत्प्रकृत्योरपि तथात्वात्, तत्त्वतस्तद्रूपाभ्यामेव प्रकृतिभ्यां विनेश्वरत्वानुपपत्तेः, विकारान् वक्ष्यमाणान् बुद्ध्यादिदेहेन्द्रियान्तान् गुणान् सुखदुःखमोहप्रत्ययाकारपरिणतान् सत्त्वादिसंज्ञकान् प्रकृतिसंभवान् त्रिगुणात्मिकामायापरिणामान् तान् सर्वान् विद्धि ॥ १९ ॥

प्रकृतिसंभवान् गुणान् विकारांश्च दर्शयन् प्रकृतेः पुरुषस्य संसारहेतुत्वं दर्शयति—

कार्यकरणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ २० ॥

कार्यं शरीरं तेनैव तदारम्भकाणि भूतानि विषयाश्च गृह्यन्ते करणानि देहस्थानि बुद्ध्यहङ्कारमनांस्युभयेन्द्रियाणि च त्रयोदश तैरेव तदाश्रिताः सुखदुःखमोहा गृह्यन्ते तेषां कार्यकरणानां कर्तृत्वे उत्पादकत्वे हेतुः कारणमारम्भकत्वेन त्रिगुणात्मिका प्रकृतिरुच्यते पुरुषो जीवः क्षेत्रज्ञः सुखदुःखानां भोग्यानां भोक्तृत्वे-उपलब्धृत्वे हेतुरुच्यते हेतुभूतोभयप्रकृतिमूलकः संसारो भोगात्मकः, कार्यकारणकर्तृत्वे, इति पाठेऽपि परिणामपरिणामिकर्तृत्व इत्यर्थः, अथवा कार्यं षोडशविकाराः कारणं सप्तप्रकृतिविकृतयस्तेषां कर्तृत्व इत्यर्थः ॥ २० ॥

भोगात्मकस्य संसारस्य निमित्तमाह—

पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान् ।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥ २१ ॥



पुरुषो भोक्ता जीवः प्रकृतिस्थो मायाऽविद्यामात्मत्वेन मन्यमान एव कार्यकरणरूपेण परिणतामविद्यामैक्याध्यासं प्राप्तो हि प्रकृतिजान् सुखाद्याकारपरिणतान् गुणान् भुङ्क्त उपलभतेऽहं सुखी दुःखी मूढः पण्डित इत्येवं जानाति, भोक्तृत्वे कारणमुक्त्वा जन्मनः प्रधानं कारणमाह कारणमित्यस्य भोक्तुः सर्वेषु सदसद्योनिजन्मसु गुणसङ्गो गुणेषु सुखदुःखमोहेषु सङ्ग आसक्तिस्तादात्म्याऽभिमानो वा कारणं सत्यामप्यविद्यायां सङ्ग एव प्रधानं कारणमिति, अथवा सत्या असत्याश्च या योनयस्तत्र जन्मसु सत्सु-अस्य संसारस्य भोगस्य कारणं गुणसङ्गः काम इति वार्थः "स यथा कामो भवति तत् क्रतुर्भवति यत् क्रतुर्भवति तत्कर्म कुरुते यत् कर्म कुरुते तदभिसम्पद्यते" इति श्रुतेः ॥ २१ ॥

प्रकृतिनिमित्तकं मिथ्यासंसारमुक्त्वा पुरुषस्य स्वरूपं साक्षान्निर्दिशति—

उपद्रष्टानुमन्ता च भर्त्ता भोक्ता महेश्वरः ।
परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः ॥ २२ ॥

अस्मिन् प्रकृतिपरिणामे देहे जीवरूपेण वर्तमानोऽपि पुरुषः परः प्रकृतिगुणास्पृष्टोऽव्यक्तात्परोऽसंसारी स्वेन रूपेणेत्यर्थः, यत उपद्रष्टा तटस्थतया द्रष्टाऽस्ति न कर्त्ता, "असङ्गो ह्ययं पुरुष" इति श्रुतेः, अथवा बाह्येन्द्रियादीनपेक्ष्यात्यन्ताव्यवहितो द्रष्टोपद्रष्टा सर्वापेक्षया प्रत्यग्रूपत्वात्, अनुमन्ता च प्रवृत्तेरवारकत्वादनुकूलत्वाच्च भर्त्ता सत्ताप्रकाशरूपेण विधारकः, भोक्ता सुखदुःखादीनां तदाकारायाश्च बुद्धेः प्रकाशकत्वात्, महेश्वरः सर्वात्मत्वात्स्वतन्त्रत्वाच्च महानीश्वरः, परमात्मा देहेन्द्रियादीनां परम उत्कृष्ट आत्मा स्वरूपं चेत्युक्तः श्रुतौ "साक्षी चेता केवलो निर्गुणश्च"। "ईशानं भूतभव्यस्य", "तत्सृष्ट्वा तदेवानुप्राविशत्" इत्यादि ॥ २२ ॥

तदेवं स च यो यत्प्रभावश्चेति व्याख्यातमिदानीं यज्ज्ञात्वामृतमश्नुत इत्युक्तमुपसंहरति—

य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।
सर्वथा वर्त्तमानोऽपि न स भूयोऽभिजायते ॥ २३ ॥

एवमुपद्रष्टृत्वादिरूपेण जीवेश्वरादिकल्पनाधिष्ठानं पुरुषं साक्षादात्मभावेन यो वेत्ति प्रकृतिं च मायामविद्यालक्षणां गुणैः स्वविकारैः सह विद्यया बाधितां यो वेत्ति स प्रारब्धकर्मानुसारेण प्रवृत्त्या निवृत्त्या वा सर्वथा सर्वप्रकारेण वर्त्तमानोऽपि भूयः पुनः पतितेऽस्मिन् शरीरे शरीरान्तराय नाभिजायते नोत्पद्यते देहान्तरं न गृह्णातीत्यर्थः, ज्ञानाग्निना सर्वकर्मवासनादीनां जन्महेतूनां प्रदा-

द्वात् प्रारब्धं कर्म तु चक्रवेगेषु वेगादिवद्वर्तत एव "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे"। तस्य तावदेव चिरं यावन्न विमोक्ष्ये" इत्यादिश्रुतेः ॥ २३ ॥

एवं तत्त्वंपदार्थौ संशोध्य तयोरैक्यं प्रतिपादितमिदानीमात्मदर्शनोपायविकल्पान् यथाधिकारं प्रतिपादयति—

ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।
अन्ये सांख्येन योगेन कर्मयोगेन चापरे ॥ २४ ॥

केचिदुत्तमा योगिनोऽधिकारिण श्रवणादेः प्रथममनुष्ठितत्वात् तत्फलभूतेन ध्यानेन निदिध्यासनेनात्मनि बुद्धौ-आत्मना संस्कृतेनान्तःकरेणात्मानं प्रत्यक्चैतन्यं पश्यन्ति साक्षात्कुर्वन्ति, अन्ये मध्यमाः सांख्येन योगेन निदिध्यासनपूर्वभाविना श्रवणादिना प्रकृतिपुरुषविवेकाभ्यासेन तयोः सदा विचारेणात्मानं पश्यन्ति, अपरे मन्दाधिकारिणः कर्मैव योगार्थत्वाद्योगस्तेनेश्वरार्पणबुद्ध्याऽनुष्ठीयमानेन सत्त्वशुद्ध्यादिद्वारा पश्यन्त्यात्मानमात्मना ॥ २४ ॥

मन्दतराणां ज्ञानसाधनमाह—

अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते ।
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥ २५ ॥

अन्ये तु मन्दतरा एषु विकल्पेष्वन्यतरेणाप्येवं यथोक्तमात्मानमजानन्तः श्रुतिपरायणाः श्रुतिः श्रवणं परमयनं मोक्षमार्गप्रवृत्तौ परं साधनं येषां ते केवलं परोपदेशप्रमाणाः सन्तोऽन्येभ्य आचार्येभ्यः श्रुत्वोपासते श्रद्दधानाः सन्त आचार्यवचनानुसारेण चिन्तयन्ति तेऽपि च मृत्युयुक्तं संसारमतितरन्त्येव किमु वक्तव्यं प्रमाणं प्रति स्वतन्त्रा विवेकिनोऽतितरन्तीत्यत्रेत्यपि शब्दाल्लभ्यते ॥ २५ ॥

"कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु" इत्युक्तं विवृणोति—

यावत्संजायते किंचित्सत्त्वं स्थावरजङ्गमम् ।
क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ! ॥ २६ ॥

हे भरतर्षभ ! यावत् किञ्चित्सत्त्वं वस्तु स्थावरं जङ्गमं वा संजायते समुत्पद्यते तत्सर्वं क्षेत्रक्षेत्रज्ञसंयोगात्, निरवयवासङ्गस्य क्षेत्रज्ञस्यान्यस्येव संयोगासंभावाज्जडचेतनयोरविवेकपरस्पराध्यासपरस्परधर्माध्यासलक्षणात्संयोगाज्जायत इत्येवं विद्धि जानीहि, अविवेकाध्यासनिमित्तत्वादेव च जन्मादिसंसारस्य विवेकेनात्मानं पश्यतोऽज्ञानलक्षणास्याविवेकस्याध्यासस्य निवृत्त्या मुक्तिरुपपद्यते, तस्मादेव चोक्तं "य एवं वेत्ति न स भूयोऽभिजायते" इत्यादि ॥ २६ ॥

एवं संसारमविद्यात्मकमुक्त्वा तन्निवर्तकविद्याकथनाय य एवं वेत्ति पुरुषमिति प्रागुक्तं विवृणोति—

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ २७ ॥

सर्वेषु ब्रह्मादिस्थावरान्तेषु भूतेषु भवनधर्मकेषु प्राणिषु समं निर्विशेषं तिष्ठन्तमपरिणममानं परमेश्वरं देहेन्द्रियमनोबुद्ध्यव्यक्त जीवात्मनोऽपेक्ष्य परमश्चासावीशनशीलश्च तं विनश्यत्सु नाशेन सर्वभावविकारोपलक्षणात् सर्वभावविकारवत्सु योऽविनश्यन्तं सर्वविकाररहितं पश्यति स एव तत्त्वं पश्यति न विपरीतदर्शी स्वप्नदर्शीव स पश्यन्नपि तत्त्वं नैव पश्यतीति भावः ॥ २७ ॥

तदेतदात्मदर्शनं फलेन स्तौतिरुच्युत्पत्तये—

समं पश्यन्हि सर्वत्र समवस्थितमीश्वरम् ।
न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥ २८ ॥

सर्वत्र सर्वभूतेषु समं तुल्यतया समवस्थितं सम्यगप्रच्युतस्वरूपेणस्थितमीश्वरमुक्तलक्षणं पश्यन्नयमहमस्मीति शास्त्रदृष्ट्या साक्षात्कुर्वन्नुपलभमानो हि यस्मादात्मानमात्मना न हिनस्ति-अनात्मसु देहादिष्वात्मबुद्धया न तिरस्करोति, पुनः पुनरनात्मानमात्मत्वेन गृहीत्वा तमपि न नाशयति तस्मात्परां गतिं याति मुच्यत इत्यर्थः देहाभिमानादिभिरात्महन्ता तु "असूर्या नाम ते लोका अन्धेन तमसावृताः । तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः" इति श्रुत्यनुसारेणासुरयोग्यलोकान् प्राप्नोतीति भावः ॥ २८ ॥

स्वगुणकर्मवैलक्षण्यभेदभिन्नेष्वात्मसु समबुद्धिरनुपपन्नेति चेत्तत्राह—

प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।
यः पश्यति तथात्मानमकर्तारं स पश्यति ॥ २९ ॥

प्रकृतिर्भगवतो माया "मायां तु प्रकृतिं विद्याद्" इति श्रुत्युक्ता तया प्रकृत्यैव महदादिकार्यकरणरूपेण परिणतया सर्वाणि कर्माणि वाङ्मनःकायारभ्याणि सर्वशः काम्यादिसर्वप्रकारैः क्रियमाणानि निर्वर्त्यमानानि यः पश्यति तथात्मानं क्षेत्रज्ञमकर्तारं सर्वोपाधिशून्यं सममेकं यः पश्यति स पश्यति परमार्थदर्शी, तथा च निर्गुणस्याकर्तुर्निर्विशेषस्य भेदे प्रमाणानुपपत्तिः ॥ २९ ॥

भेददर्शनमपाकुर्वन् पुनरपि सम्यग् दर्शनं प्रपञ्चयति—

यदा भूतपृथग्भावमेकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥ ३० ॥

यदा यस्मिन् काले भूतपृथग्भावं भूतानां पृथग्भावं पृथक्त्वमेकस्थमेकस्मिन्नात्मनि स्थितं कल्पितमनुपश्यति शास्त्राचार्योपदेशेन साक्षात्करोति "आत्मैवेदं सर्वम्, सर्वं खल्विदं ब्रह्म, नेह ना-

नास्ति किञ्चन" "अहं ब्रह्मास्मि" इत्यादिश्रुत्या, तत एव च परमात्मन एकस्मान्मायया सर्वं विस्तारमुत्पत्तिं विकाशं च यः पश्यति "यतो वा इमानि भूतानि जायन्ते" इत्यादि श्रुत्या तदा तस्मिन् काले स ब्रह्म संपद्यते ब्रह्मैव भवति "ब्रह्म वेद ब्रह्मैव भवति" इति श्रुतेः, "अहं ब्रह्मास्मि" इत्यादितश्च ॥ ३० ॥

एकस्यात्मनः सर्वदेहात्मत्वे तद्दोषसंबन्धे प्राप्ते तद्वारयन् तत्प्रभावं दर्शयन् यः पश्यति तथात्मानमकर्त्तारं स पश्यतीत्येतद्विवृणोति—

अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः ।
शरीरस्थोऽपि कौन्तेय ! न करोति न लिप्यते ॥३१॥

अयमपरोक्षः परमात्मा परमेश्वराभिन्नः प्रत्यगात्माऽनादित्वान्निर्गुणत्वाच्चाऽव्ययः सर्वविकारशून्य इत्यर्थः, अवयवैर्गुणैर्वा विकारो भवति तेषां संयोगविभागोत्पत्तिविनाशन्यूनाधिकभावादितः, परमात्मनस्त्वनादित्वान्निर्गुणत्वाच्च नैव विकारः सम्भवति, निर्विकारत्वाच्च शरीरस्थोऽपि शरीरेषूपलभमानोऽपि तस्मिन् कुर्वत्ययमात्मा न करोति कर्तृत्वाभावाच्च कर्मफलेन न लिप्यते, कस्तर्हि कर्त्तेति चेद्भगवतैवोक्तं "स्वभावस्तु प्रवर्तते" "प्रकृत्यैव च कर्माणि क्रियमाणानि" इत्यादि, तस्माच्च सर्वभेदरहितआत्मा सिद्धः ॥३१॥

लेपाभावे दृष्टान्तमाह—

यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।
सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥ ३२ ॥

यथाऽऽकाशं सर्वगतं व्याप्यपि पङ्कादिभिर्नोपलिप्यते न संबध्यते सौक्ष्म्यादसङ्गाप्रतिहतस्वभावत्वात्, तथा सर्वत्र देहेऽवस्थितोऽप्यात्मा देहधर्मैर्नोपलिप्यते सूक्ष्मत्वादसङ्गत्वादप्रतिहतस्वभावत्वादेव ॥ ३२ ॥

प्रकाशकत्वाच्च प्रकाश्यधर्मैर्न लिप्यत इति दृष्टान्तेनाह—

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ! ॥ ३३ ॥

यथा एको रविः सूर्यः कृत्स्नं सर्वमिमं प्रत्यक्षादिनाऽनुभूयमानं लोकं देहेन्द्रियादिकं रूपवद् वस्तुमात्रं प्रकाशयति न प्रकाश्यधर्मैर्लिप्यते न वा प्रकाश्यभेदाद्भिद्यते, हे भारत ! तथैव क्षेत्री परमात्मा कृत्स्नं सर्वं क्षेत्रं महाभूतादिधृत्यन्तमेकः सन् प्रकाशयति प्रकाशयन्नपि न भिद्यते नापि तद्धर्मैर्लिप्यत इति "सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः । एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः" इति श्रुतिश्च ॥ ३३ ॥

अध्यायार्थं सफलमुपसंहरति—

क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।
भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥ ३४ ॥

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे प्रकृतिपुरुषविवेकयोगो नाम त्रयोदशोऽध्यायः ॥१३॥

क्षेत्रक्षेत्रज्ञयोर्जडचेतनयोरेवमुक्तरीत्याऽन्तरं वैलक्षण्यं विकारित्वनिर्विकारित्वादिरूपं ज्ञानचक्षुषा ज्ञानदृष्ट्या ये विदुः, भूतप्रकृतिमोक्षं च भूतानां सर्वेषां प्रकृतिः कारणमविद्यालक्षणाऽव्यक्ताख्या माया तस्या मोक्षणमभावगमनं निवृत्तिं परमार्थविद्यया ये विदुर्विजानन्ति ते परं परमार्थतत्त्वं ब्रह्म यान्ति पुनर्देहं नाददते तस्मात्परमपुरुषार्थसिद्धिरनेनाध्यायेनोक्तेति वेदितव्या ॥३४॥

परापरप्रकृत्योर्हि क्षेत्रक्षेत्रज्ञरूपयोः ।
सम्यग्भेदं विदित्वैव क्षेत्रज्ञे साक्षिरूपिणि ॥ १ ॥

मनसः सम्यगाधानं योगः शुद्धे चिदात्मनि ।
भवति मोक्षदो नित्ये ब्रह्मण्येवोत्तमोत्तमः ॥ २ ॥
तस्मादादौ विवेकेन कूटस्थं प्रविविच्य तम् ।
लक्षणेन समे शुद्धे बुद्ध्या सम्यग्नियोज्य च ॥ ३ ॥
असङ्गसमशुद्धात्मसाक्षिरूपे स्थिरो मुनिः ।
ज्ञानचक्षुःसमायुक्तः प्राप्नोति परमं पदम् ॥ ४ ॥

इति श्रीमत्स्वामिहनुमद्दासषट्शास्त्रिविरचितायां सारसंग्राहिकायां टीकायां त्रयोदशोऽध्यायः ॥ १३ ॥

---

# चतुर्दशोऽध्यायः ( १४ )

पूर्वाऽध्याये क्षेत्रक्षेत्रज्ञयोः संयोगात्सर्वमुत्पद्यत इत्युक्तं तत्कथमिति प्रकाशनार्थमीश्वरतन्त्रयोः क्षेत्रक्षेत्रज्ञयोर्जगत्कारणत्वं न सांख्यानामिव स्वतन्त्रयोरित्येवमर्थं च, तथा "कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु" इत्युक्तं तत्र कस्मिन् गुणे कथं सङ्गः के वा गुणाः कथं बध्नन्ति गुणेभ्यश्च मोक्षणं कथं स्यादिति, मुक्तस्य च किं लक्षणमित्येवमर्थं चायमध्यायस्तत्रादौ वक्ष्यमाणमर्थं स्तौति द्वाभ्याम्—

श्रीभगवानुवाच

परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।
यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥ १ ॥

ज्ञानानां यज्ञादिज्ञेयवस्तुविषयाणां नत्वमानित्वादीनां तेषामप्यन्तरङ्गत्वेनोत्तमफलत्वात्, तस्मादुक्तानां ज्ञानानां मध्ये परं

प्रकृष्टं विषयतः परवस्तुविषयत्वादुत्तममुत्तमफलं मोक्षफलत्वात्, ईदृशं ज्ञानं परमात्मज्ञानसाधनमहं भूयः पुनर्वक्ष्यामि पूर्वाध्याये-षूक्तमपि, यज्ज्ञानं ज्ञात्वा लब्ध्वाऽनुष्ठाय सर्वे मुनयो मननशीलाः परां सिद्धिं मोक्षाख्यामितो देहबन्धनादूर्ध्वं गताः प्राप्ताः ॥ १ ॥

उक्तसिद्धेरैकान्तिकत्वं दर्शयति—

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ २ ॥

इदं यथोक्तं ज्ञानं ज्ञानसाधनमुपाश्रित्यानुष्ठाय मम परमेश्वरस्य साधर्म्यं स्वरूपतामभेदमागताः प्राप्ताः "ब्रह्मवेद ब्रह्मैव भवती"-तिश्रुतेः, तस्मात्ते सर्गे सृष्टिकालेऽपि नोत्पद्यन्ते नोपजायन्ते प्रलये ब्रह्मणोऽपि विनाशकाले न व्यथन्ति व्यथां न प्राप्नुवन्ति न च्यवन्ति न लीयन्ते ॥ २ ॥

परमेश्वराधीनयोः क्षेत्रक्षेत्रज्ञयोः संयोगो भूतकारणमित्याह—

मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम् ।
सम्भवः सर्वभूतानां ततो भवति भारत ! ॥ ३ ॥

मम मदीया माया त्रिगुणात्मिका सर्वभूतानां योनिः प्रकृति गर्भाधानस्थानं, सैव च सर्वस्वकार्येभ्यो महत्त्वाद्भरणाच्च स्वविकाराणां बृंहणत्वान्महद् ब्रह्म तस्मिन् महति ब्रह्मणि योनावहं क्षेत्र-क्षेत्रज्ञप्रकृतिद्वयशक्तिमानीश्वरो गर्भं जन्मकारणं बीजं हिरण्यगर्भ-स्याप्युत्पत्तिहेतुभूतं दधामि निक्षिपामि—अविद्याकामकर्मोपाधिस्व-रूपानुविधायिनं क्षेत्रज्ञं क्षेत्रेण संयोजयामि "एकोऽहं बहु स्यां प्रजायेय" इतीक्षणरूपं सङ्कल्पं धारयामि ततस्तस्माद्गर्भाधानात्सर्व-भूतानां सम्भव उत्पत्तिर्हिरण्यगर्भोत्पत्तिद्वारेण भवति हे भारत ! नान्यथा ॥ ३ ॥

न केवलं सृष्ट्युपक्रमेऽहं गर्भाधानकर्त्ता किन्तु सदैवेत्याह—

सर्वयोनिषु कौन्तेय ! मूर्त्तयः सम्भवन्ति याः ।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥ ४ ॥

सर्वयोनिषु देवपितृमनुष्यपश्वादिषु सर्वासु योनिषु या मूर्त्तयो जरायुजाद्या देहाः संभवन्ति सञ्जायन्ते तासां मूर्त्तीनां तत्तत्कारण-भावापन्नं महद् ब्रह्मैव योनिर्मातृस्थानीयं कारणमहं च परमेश्वरो बीजप्रदो गर्भाधानस्य कर्त्ता पिता, तेन महतो ब्रह्मण एवावस्था-विशेषाः कारणान्तराणीति युक्तमुक्तं "सम्भवः सर्वभूतानां ततो भवति" इति ॥ ४ ॥

के गुणाः कथं वा ते बध्नन्ति कस्मिन् गुणे कथं वा सङ्ग इत्यु-च्युते चतुर्दशभिः—



सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः ।
निबध्नन्ति महाबाहो ! देहे देहिनमव्ययम् ॥ ५ ॥

सत्त्वं रजस्तम इत्येवं नामानो गुणा नित्यपरतन्त्राः सर्वेषाम-चेतनानां चेतनार्थत्वात्, गुणा इति पारिभाषिकः शब्दो न रूपा-दिवद् द्रव्याऽऽश्रिताः, गुणसाम्यावस्थारूपत्वात्प्रकृतेर्न गुणगुणिनो भेदो विवक्षितोऽस्ति, गुण इव पुरुषाधीनत्वाद्गुणा इति कथ्यन्ते, ते च प्रकृतिसम्भवा भगवन्मायासम्भवास्तेषां साम्यावस्थारूपा प्रकृतिः सम्भवोऽभिव्यक्तिकारणं येषां तेऽव्ययं देहिनं देहे निब-ध्नन्ति हे महाबाहो !, अनादित्वनिर्गुणत्वादिभिरव्ययं निर्विकार-मसङ्गमात्मानं निबध्नन्तीव निर्विकारमेव सन्तं स्वविकारवत्तयोप-दर्शयन्तीत्यर्थः ॥ ५ ॥

तत्र को गुणः केन सङ्गेन बध्नातीत्युच्यते—

तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ! ॥ ६ ॥

तत्र तेषु गुणेषु मध्ये निर्मलत्वात्स्वच्छत्वात्स्फटिकवत् प्रकाशकं चैतन्याभिव्यञ्जकं तमोगुणकृतावरणतिरोधायकमनामयं निर्दोषं निरुपद्रवं दुःखविरोधिसुखाभिव्यञ्जकं सत्त्वं सत्त्वगुणः सुखसङ्गेन सुख्यहमितिविषयभूतसुखस्यात्मन्यारोपेण बध्नाति, तथा सत्त्वधर्मस्य ज्ञानस्य सङ्गेन च बध्नाति देहिनं हे अनघ ! "इच्छा-द्वेषः सुखं दुःखं सङ्घातश्चेतना धृति"रित्यत्र सुखज्ञानयोरप्यनात्मधर्मत्वमुक्तं तयो-रात्मन्यध्यासः सङ्गस्तन्निमित्तो बन्धोऽविद्यैवेति ॥ ६ ॥

रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।
तन्निबध्नाति कौन्तेय ! कर्मसङ्गेन देहिनम् ॥ ७ ॥
तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ! ॥ ८ ॥

रज्यतेऽनेनेति रागः साध्यप्राप्ताप्राप्तविषये कामो मनस इच्छा-लक्षणः स आत्मा स्वरूपं यस्य तद्रागात्मकं, तृष्णा प्राप्ताप्राप्ताभिलाष आसङ्गः प्राप्ते विषये मनस आसक्तिस्तयोः समुद्भवं निदानं रजोगुणं विद्धि, हे कौन्तेय ! तद्रजः कर्मसङ्गेनाहं करोमि फलं भोक्ष्य इति कर्मस्वभिमानेन देहिनं वस्तुतोऽकर्त्तारमेव कर्तृत्वाभि-मानिनं बध्नाति कर्मसु सङ्गस्तत्परताऽऽसक्तिस्तद्द्वारा बध्नातीत्यर्थः ॥ ७ ॥ तमस्त्वज्ञानजमज्ञानादावरणशक्तेर्जातं सर्वदेहिनां मोहनं विवेकप्रतिबन्धकं भ्रान्तिजनकं विद्धि तत्तामः प्रमादालस्यनिद्राभिः कर्तव्याऽकरणरूपेण प्रमादेनेहोत्साहप्रतिबन्धकेनालस्येन स्वप्नात्म-केन निद्रया च बध्नाति हे भारत ! ॥ ८ ॥

पुनरुत्कर्षं प्राप्तानां गुणानां व्यापारः संक्षेपेणोच्यते—

सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत ! ।
ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥ ९ ॥

सत्त्वमुत्कृष्टं सत् सुखे सञ्जयति संश्लेषयति हे भारत ! एव-मुत्कृष्टं रजः कर्मणि देहिनं सञ्जयति, तमस्तु प्रमादबलेनोत्पद्यमा-नमपि ज्ञानं सत्त्वकार्यमावृत्य विवेकमाच्छाद्य प्रमादे प्राप्तकर्तव्या-करणादौ देहिनं सञ्जयति, उतापि चालस्ये निद्रायां सञ्ज-यतीत्यर्थः ॥ ९ ॥

उक्तं कार्यं कदा कुर्वन्ति गुणा इत्युच्यते—

रजस्तमश्चाभिभूय सत्त्वं भवति भारत ! ।
रजः सत्त्वं तमश्चैव तमः सत्त्व रजस्तथा ॥१०॥

रजस्तमश्चोभावप्यभिभूय तिरोधाय सत्त्वं भवत्युद्भवति वर्धते यदा तदा लब्धात्मकं सत्त्वं स्वकार्यं ज्ञानसुखादि करोति हे भारत ! एवं सत्त्वं तमश्चोभावभिभूय यदा रजो भवति तदा स्व-कार्यं कर्मतृष्णादि करोति, तथैव सत्त्वं रजश्चोभावभिभूय यदा तमो वर्धते तदा स्वकार्यं ज्ञानावरणादि करोति ॥ १० ॥

इदानीमुद्भूतानां तेषां लिङ्गान्याह—

सर्वद्वारेषु देहेऽस्मिन्प्रकाश उपजायते ।
ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥११॥

अस्मिन् भोगायतने देहे सर्वद्वारेषु सर्वेष्वपि करणेषु श्रोत्रा-दिषूपलब्धिसाधनेषु यदा प्रकाशो बुद्धिवृत्तिविशेषस्तदेव ज्ञानं शब्दादिविषयकमुपजायते तदा तेन लिङ्गेन प्रकाशेन विवृद्धं सत्त्वं विद्यादुतापि च सुखादिलिङ्गेन विद्यात् ॥ ११ ॥

रजस उद्भूतस्य चिह्नमाह—

लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ! ॥ १२ ॥

लोभः स्वधनादिसत्त्वेऽपि परधनादितृष्णा, प्रवृत्तिः प्रवर्त्तनं सामान्यचेष्टा, आरम्भः कर्मणां काम्यादिकर्मणां व्यापाराणां प्रारम्भ उद्यमः, अशमो हर्षरागादिहेतुकप्रवृत्तेरनुपशमः, स्पृहा सर्व-सामान्यवस्तुविषया तृष्णा, रागात्मके रजसि विवृद्धे सत्येतानि लिङ्गानि जायन्ते हे भरतर्षभ ! एतैर्विवृद्धं रजो जानीयादिति ॥१२॥

उद्भूतस्य तमसश्चिह्नमाह—

अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ! ॥ १३ ॥

अप्रकाशः कर्तव्याकर्तव्ययोरत्यन्ताविवेकोऽप्रवृत्तिश्च योग्येऽपि कर्मादौ प्रवृत्त्यभावश्च, प्रमाद उक्तः, मोहो ज्ञातव्याविवेको मूढता, चकार आलस्यादिसमुच्चयार्थः, एवकारो व्यभिचारवारणार्थः, तमस्येव विवृद्धे एतानि लिङ्गानि जायन्ते हे कुरुनन्दन ! अत एतैर्लिङ्गैरवश्यं विवृद्धं तमो जानीयात् ॥ १३॥

मरणद्वारेणापि यत्पारलौकिकं फलं प्राप्यते तदपि सहेतुकं सर्वं गुणप्रयुक्तमेवेति दर्शयन्नाह गतिविशेषान्—

यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।
तदोत्तमविदां लोकानमलान्प्रतिपद्यते ॥ १४ ॥
रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ।
तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥ १५ ॥

यदा सत्त्वे प्रवृद्धे विवृद्धे तु देहभृद् देहाभिमानी जीवः प्रलयं मृत्युं

याति प्राप्नोति तदोत्तमविदां महत्तत्त्वहिरण्यगर्भादितत्त्वविदामुत्तमानां ये उपासकास्तेषाममलान् रजस्तमोमलरहितांल्लोकान् प्रतिपद्यते देवसुखोपभोगस्थानविशेषान् प्राप्नोतीत्यर्थः ॥ १४ ॥ रजसि प्रवृद्धे प्रलयं मृत्युं गत्वा प्राप्य कर्मसङ्गिषु कर्मासक्तियुक्तेषु मनुष्येषु जायते, तथा तद्वदेव तमसि प्रवृद्धे प्रलीनो मृतो मूढयोनिषु पश्वादिषु जायते ॥ १५ ॥

इदानीं स्वानुरूपकर्मद्वारा गुणानां विचित्रफलतां संक्षिप्याह—

कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम् ।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥ १६ ॥

सुकृतस्य शोभनस्य कृतस्य पुण्यस्य सात्त्विकस्याऽशुद्धिरहितस्य कर्मणो धर्मस्य सात्त्विकं सत्त्वेन निर्वृत्तं निर्मलं निर्दोषं सुखं फलं परमर्षय आहुः, रजसो राजसस्य कर्मणस्तु कर्माधिकारात् पापमिश्रस्य पुण्यस्य दुःखं राजसमेव फलमाहुः, तमसस्तामसस्य कर्मणोऽधर्मस्याज्ञानमविवेकं पश्वादियोनिषु दृश्यमानं फलमाहुः ॥१६॥

सत्त्वादिगुणानां कार्येण कारणज्ञानाय कार्यान्तरमुक्तफलवैचित्र्ये हेतुञ्चाह—

सत्त्वात्सञ्जायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥१७॥

सत्त्वाल्लब्धात्मकाद्रजस्तमोऽभिभूय वर्तमानात्सर्वकारणद्वारकं प्रकाशरूपं ज्ञानं सञ्जायते, ततः सात्त्विकात्कर्मणः सुखं भवति, एवं लब्धात्मकाद्रजसो लोभ एव च सञ्जायते ततो राजसात्कर्मणो दुःखं भवति, एवं लब्धात्मकात्तमसः प्रमादमोहौ भवतो जायेते अज्ञानमेव च जायते तामसकर्मानुरूपमिति, तस्माद्गुणानुसारेण कर्मफलवैचित्र्यं युक्तमेवोक्तमिति ॥ १७ ॥

सत्त्वादिवृत्तस्थानां प्रागुक्तमेव फलमूर्ध्वमध्याधो विभागेनाह—

ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तस्था अधो गच्छन्ति तामसाः ॥ १८॥

अन्ते वृत्तशब्दप्रयोगात्सर्वत्र वृत्तत्वेव विवक्षितं, तेन सत्त्वस्थाः सत्त्वगुणवृत्ते सत्कर्मभक्त्युपासनादौ निरता ऊर्ध्वं गच्छन्ति देवलोकादावुत्पद्यन्ते राजसा रजोवृत्तस्था मध्ये मनुष्यलोके तिष्ठन्ति मनुष्येषूत्पद्यन्ते जघन्यो गुणद्वयापेक्षया निकृष्टो गुणस्तमस्तद्वृत्तस्था मूढा अधोगच्छन्ति पश्वादिषूत्पद्यन्ते, कदाचित्तमोवृत्तस्थाः सात्त्विका राजसाः सम्भवन्ति तद्व्यावृत्तय आह तामसाः सदा तमः प्रधाना अधोगच्छन्तीति ॥ १८ ॥

जन्मादिसंसारस्य कारणं मिथ्याज्ञाननिमित्तः संयोगः पूर्वाध्याये संक्षेपेणोक्तः स इह विस्तरेण व्याख्यातोऽधुना मोक्षो वक्तव्य इत्याह—



नान्यं गुणेभ्यः कर्त्तारं यदा द्रष्टानुपश्यति ।
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥१९॥

यदा द्रष्टा विविक्तात्मदर्शी विद्वान् सन् कार्यकरणविषयाकारपरिणतगुणेभ्योऽन्यं कर्त्तारं नानुपश्यति किन्तु विचारमनुपश्चाद् गुणा एव कार्यकरणादिरूपाः सर्वकर्मणां कर्त्तार इत्येवं पश्यति गुणेभ्यश्च परं व्यतिरिक्तं गुणव्यापारसाक्षिणं सर्वत्र समं निर्विकारमेकं क्षेत्रज्ञमात्मानं वेत्ति तदा स मद्भावमधिगच्छति ॥ १९ ॥

कथमधिगच्छतीत्युच्यते—

गुणानेतानतीत्य त्रीन्देही देहसमुद्भवान् ।
जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ २० ॥

मायात्मकानेतान् सत्त्वादिलक्षणान् गुणान् समुद्भवन्त्येभ्यः समुद्भवा देहानां समुद्भवा देहसमुद्भवास्तान् देहोत्पत्तिबीजभूतानतीत्य तत्त्वज्ञानेन बाधित्वा जीवन्नेव गुणानतिक्रम्य जन्म च मृत्युश्च जरा च दुःखानि च जन्ममृत्युजरादुःखानि तैर्जीवन्नेव विमुक्तो देही विद्वान् मद्भावममृतमश्नुतेऽधिगच्छति ॥ २० ॥

जीवन्नेव गुणानतीत्यामृतमश्नुत इति प्रश्नबीजं प्रतिलभ्य—

अर्जुन उवाच

**कैर्लिङ्गैस्त्रीन्गुणानेतानतीतो भवति प्रभो ! ।**
**किमाचारः कथं चैतांस्त्रीन्गुणानतिवर्त्तते ॥ २१ ॥**

हे प्रभो ! एतांस्त्रीन् गुणानतीतो यः स कैर्लिङ्गैश्चिह्नैर्विशिष्टो भवतीत्येकः प्रश्नः, क आचारो यस्य स किमाचारः कोऽस्य गुणातिक्रान्तस्याचारः कथं स वर्त्तत इति द्वितीयः, कथं केन प्रकारेणैतांस्त्रीन्गुणानतिवर्त्तते गुणातिवर्त्तने क उपाय इति तृतीयः ॥ २१ ॥

प्रथमप्रश्नस्योत्तरं वक्तुं तावत्—

श्रीभगवानुवाच

**प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ! ।**
**न द्वेष्टि सम्प्रवृत्तानि न निवृत्तानि काङ्क्षति ॥ २२ ॥**

प्रकाशं सत्त्वकार्यं ज्ञानं प्रवृत्तिं रजःकार्यं मोहं तमःकार्यं चात्सर्वाण्यपि गुणकार्याणि स्वसामग्रीवशात्सम्प्रवृत्तानि सम्यगुद्भूतानि दुःखादिरूपाण्यपि दुःखादिबुद्ध्या यो न द्वेष्टि, तथा विनाशसामग्रीवशान्निवृत्तानि नष्टानि सुखरूपाण्यपि सुखादिबुद्ध्या यो न काङ्क्षति, सदा समो भवति सर्वत्र मिथ्यात्वबुद्ध्या स रागद्वेषादिशून्यो गुणातीत उच्यत इति चतुर्थेनान्वयः, इदं स्वात्मप्रत्यक्षं लक्षणं स्वार्थमेव न परार्थं, स्वाश्रितरागद्वेषतदभावानां परैरदृश्यत्वात् ॥२२॥

द्वितीयप्रश्नस्य प्रतिवचनमाह—

उदासीनवदासीनो गुणैर्यो न विचाल्यते ।
गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते ॥ २३ ॥

उदासीनवद् यथोदासीनो न कस्यचित्पक्षं भजते रागद्वेषौ नैव करोति तथाऽयं विद्वान् गुणातीतत्वोपायमार्ग आसीनः स्वरूपेऽव स्थितो गुणैः सुखदुःखाद्याकारैर्न विचाल्यते स्वरूपावस्थानान्न प्रच्याव्यते, किन्तु गुणा एवैते कार्यकरणविषयाकारा अन्योऽन्यस्मिन् वर्तन्त इत्येवं निश्चित्य यः स्वात्मन्येवावतिष्ठति तदात्मनावतिष्ठते तेन नेङ्गते न चलति स्वरूपावस्थ एव भवति स गुणातीत उच्यते ॥ २३ ॥

समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः ।
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥ २४ ॥
मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।
सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥ २५ ॥

समे रागद्वेषानुत्पादकतयाऽनात्मधर्मतया तुल्ये सुखदुःखे यस्य स समदुःखसुखः स्वस्मिन्नविक्रियात्मनि स्थितः स्वस्थः प्रसन्नः, समान्यहेयोपादेयानि लोष्टादीनि यस्य स समलोष्टाश्मकाञ्चनः, तुल्ये प्रियाप्रिये सुखदुःखसाधने यस्य स तुल्यप्रियाप्रियो धीरो धीमान् धृतिमान् तुल्ये निन्दात्मसंस्तुती यस्य स तुल्यनिन्दात्मसंस्तुतिः सर्वत्र निर्विकारो गुणातीत उच्यते ॥ २४ ॥ मानापमानयोरादरानादरयोस्तुल्यो निर्विकारः समः सत्कारासत्कारयोरित्यर्थः, तथा परदृष्ट्या यौ मित्रशत्रू तयोर्मित्रारिपक्षयोस्तुल्यो निष्पक्ष उदासीनो मित्रपक्षस्येवारिपक्षस्याप्यपकारशून्योऽत एवारभ्यन्त इत्यारम्भा

दृष्टादृष्टार्थानि कर्माणि तान् सर्वांस्त्युक्तुं शीलमस्य स सर्वारम्भपरित्यागी यः स गुणातीत उच्यते यत्नसाध्यमेतत्सर्वं गुणातीतत्वसाधनं मुमुक्षुभिरनुष्ठेयं भवति, जीवन्मुक्ते स्वभावसिद्धं गुणातीतस्य लक्षणं भवतीति ॥ २५ ॥

कथं गुणानतिवर्तत इत्यस्य प्रतिवचनमाह—

मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते ॥ २६ ॥

मामीश्वरं सर्वभूतहृदयाश्रितं नारायणं चकारात्पूर्वोक्तगुणातीतलक्षणं प्रयत्नसाध्यं च यो यतिः कर्मी वाऽव्यभिचारेण व्यभिचारशून्येन परप्रेमलक्षणेनैकान्तिकेन भक्तियोगेन भजनं भक्तिः सैव युज्यतेऽनेनेति योगस्तेन तत्त्वज्ञानोत्पादकेन विवेकज्ञानात्मकेन द्वादशाध्यायोक्तरीत्या सेवते सदा चिन्तयति स ईश्वरानुगृहीत ईश्वरभक्तः सम्यग्ज्ञानयुक्तः सन्नेतान् गुणानतीत्य जीवन्नेवातिक्रम्य ब्रह्मभूयाय ब्रह्मभवनाय मोक्षाय कल्पते समर्थो भवति, तस्मान्मद्भक्तिगुणातीतत्वोपाय इति ॥ २६ ॥

अत्रैव हेतुमाह—

ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥ २७ ॥

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे प्रकृतिपुरुषविवेकयोगो नाम चतुर्दशोऽध्यायः ॥१४॥

हि यस्माद् ब्रह्मणः परमात्मनो जगदीशस्याहं प्रत्यगात्मा शुद्धात्मा साक्षिस्वरूपः प्रतिष्ठा प्रतितिष्ठत्यस्मिंस्तथा पारमार्थिकात्मा निर्गुणं ब्रह्माहमस्मि कथंभूतस्य ब्रह्मणोऽमृतस्याविनाशिनोऽव्य-

यस्य निर्विकारस्य च शाश्वतस्य नित्यस्य धर्मस्य ज्ञाननिष्ठालक्षणस्याद्वेष्टृत्वादेरैकान्तिकस्याऽव्यभिचारिणो ब्रह्मानन्दसुखस्य च प्रतिष्ठा विषयः स्वरूपश्चाहमेवास्मि ततो मद्भक्त्या ब्रह्मभूयाय कल्पत इति ॥ २७ ॥

गुणत्रयविभागेन तद्भिन्ने परमात्मनि ।
प्रकृतिभ्यो विविक्ते हि योगो भवति मोक्षदः ॥ १ ॥
भक्तियोगेन संसेव्य जायते यत्स्वरूपताम् ।
तमव्ययं हरिं वन्दे सद्गुरुं सर्वसाक्षिणम् ॥ २ ॥
ब्रह्मणो वेदरूपस्य ब्रह्मणश्च स्वयंभुवः ।
स्वरूपेणाव्ययस्यैव विमोक्षाख्याऽमृतस्य च ॥ ३ ॥
प्रतिष्ठा यो विभुर्देवो नित्यानन्दोऽद्वयोऽमलः ।
तं वन्दे धर्मसेतुं वै हेतुं सर्वस्य शर्मणः ॥ ४ ॥
गुणभेदेन मोहेन ज्ञात्वा भेदं निजात्मनि ।
रागद्वेषादिकं कृत्वा ह्यकृत्वा गुणविस्मृतिम् ॥ ५ ॥
जनित्वा यो भवाटव्यामटाटयते पुनः पुनः ।
स एव भक्तियोगेन गुरुमाराध्य यत्नतः ॥ ६ ॥
गुणातीतं परं श्रुत्वा मत्वा ध्यात्वा निरन्तरम् ।
गुणातीतः स्वयं भूत्वा ह्युदासीनो विराजते ॥ ७ ॥

इति श्रीमत्स्वामिहनुमद्दासषट्शास्त्रिविरचितायां सारसंग्राहिकायां टीकायां चतुर्दशोऽध्यायः ॥ १४ ॥

# पञ्चदशोऽध्यायः (१५)

यस्मान्मदधीनं कर्मफलं ज्ञानफलञ्चातो भक्तियोगेन मत्सेविनो मत्प्रसादाद् गुणातीता मोक्षं गच्छन्तीति, ये पुनरात्मनस्तत्त्वमेव सम्यग् जानन्ति ते तेन गुणातीताः सन्तो मोक्षं गच्छन्तीति किमु वक्तव्यमित्यतोऽर्जुनेनापृष्टमप्यात्मनस्तत्त्वं विवक्षुः —

श्रीभगवानुवाच

ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ १ ॥

ऊर्ध्वमूलमित्यादि तत्रादौ वृक्षरूपककल्पनया वैराग्यार्थं संसारस्वरूपं वर्णयति, संसाराद्विरक्तस्यैव भगवत्तत्त्वज्ञानेऽधिकारात्, ऊर्ध्वं कालतः सूक्ष्मत्वात्कारणत्वान्महत्त्वान्नित्यत्वाच्चोत्कृष्टं मायाशक्तिमद् ब्रह्म मूलं यस्य स संसारवृक्ष ऊर्ध्वमूलस्तं तस्मान्मूलादधो निकृष्टा महदहङ्कारादयः शाखा इव यस्य सोऽधःशाखस्तं, न श्वोऽपि प्रभातपर्यन्तमपि स्थातेत्यश्वत्थः क्षणभङ्गुरस्तमश्वत्थं प्रवाहरूपेणानादित्वादव्ययं तत्त्वज्ञानमन्तरेणानुच्छेद्यमत एवानन्तदेहादिसन्तानाश्रयं संसारवृक्षं श्रुतयः प्राहुः "ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः" इति । यस्य विश्ववृक्षस्य च्छन्दांसि वेदाः पर्णानीव भवन्ति धर्माधर्मतत्फलप्रकाशनद्वारा छादनाद्रक्षणात्प्रावरणाद्वा तं समूलं वृक्षं यो वेद स वेदविद्वेदार्थविदित्यर्थः, न हि समूलात्संसारादन्यज्ज्ञेयोऽवशिष्यत इति भावः, वायुपुराणे चास्य वृक्षस्य वर्णनमस्ति, तथाहि—"अव्यक्तमूलप्रभवस्तस्यैवानुग्रहोत्थितः । बुद्धिस्कन्धमयश्चैव इन्द्रियान्तरकोटरः ॥ महाभूतविशाखश्च विषयैः पत्रवांस्तथा । धर्माधर्मसुपुष्पश्च सुखदुःखफलोदयः ॥ आजीव्यः सर्वभूतानां ब्रह्मवृक्षः सनातनः । एतद् ब्रह्मवनं चैव

ब्रह्माचरति नित्यशः ॥ एतच्छित्त्वा च भित्त्वा च ज्ञानेन परमासिना ततश्चात्मरतिं प्राप्य तस्मान्नावर्तते पुनः”। इन्द्रियाणामन्तराणि छिद्राणि कोटराणि यस्य, महाभूतानि विशाखाः स्तम्भा यस्य आजीव्य उपजीव्यः, ब्रह्माधिष्ठितो वृक्षो ब्रह्मवृक्षः, एतच्च ब्रह्मणः परमात्मनो वनं वननीयं जीवरूपेण भोग्यमुपलब्धिस्थानं वाऽत्र स उपलभ्यत इत्यादि ॥ १ ॥

तस्यैव संसारवृक्षस्यापरावयवकल्पनोच्यते—

**अधश्चोर्ध्वं प्रसृतास्तस्य शाखा गुणप्रवृद्धा विषयप्रवालाः ।**
**अधश्च मूलान्यनुसन्ततानि कर्मानुबन्धीनि मनुष्यलोके ॥२॥**

अधो मनुष्यादिभ्यो यावत्स्थावरं मनुष्यलोकमारभ्यावीचिपर्यन्तं, ऊर्ध्वं तत एवारभ्य यावद् ब्रह्मादि ब्रह्मलोकपर्यन्तं तस्य संसारवृक्षस्य शाखा इव शाखाः प्रसृताः प्रगताः प्रकर्षेण व्याप्ताः सन्ति ताश्च गुणप्रवृद्धाः सत्त्वादिभिर्गुणैरुपादानभूतैः प्रवृद्धाः स्थूलीकृताः किञ्च विषयप्रवालाः शब्दादिविषयाः प्रवाला अभिनवपल्लवा इव यासां ताः शाखाः प्रसृताः, परमं मूलं पूर्वमुक्तं कर्मफलजनितरागद्वेषादिवासना मूलानीव धर्मादिप्रवृत्तिकारणान्यवान्तरभवान्यधश्चानुसन्ततानि देहाद्यपेक्षयाऽधोऽनुस्यूतानि कर्मानुबन्धीनि कर्म धर्माधर्मलक्षणमनुबन्धः पश्चाद्भावी येषां तानि कर्मजननशीलानि मनुष्यलोके मनुष्यदेहेऽनुसन्ततानि विशेषतः सन्ति ॥ २ ॥

“को अद्धा वेद क इह प्रवोचत्कुत आजाता कुत इयं विसृष्टिः” इत्यादि वेदमन्त्रबोधितमनिर्वाच्यत्वमस्य वदन् तदुच्छेदायाह—

**न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च सम्प्रतिष्ठा ।**
**अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्त्वा ॥३॥**

ततः पदं तत्परिमार्गितव्यं यस्मिन्गता न निवर्त्तन्ति भूयः ।
तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी ॥४॥

अस्य विश्ववृक्षस्य यथा शास्त्रे रूपं वर्णितमूर्ध्वमूलत्वादि तथाऽस्य रूपमिह संसारे स्थितैः प्राणिभिर्नोपलभ्यते, अत एव नान्त उपलभ्यते, न चादिरुपलभ्यते, न च प्रतिष्ठा स्थितिरुपलभ्यते यस्मादेवं तस्मात्सुविरूढमूलमत्यन्तबद्धमूलमेनमश्वत्थमसङ्गशस्त्रेण पुत्रवित्ताद्यासक्तित्यागवैराग्यशस्त्रेण दृढेन विवेकाभ्यासबलयुक्तेन छित्त्वा सबीजमुद्धृत्य ॥ ३ ॥ ततस्तत्पश्चात्तत्परमं वैष्णवं पदं स्वरूपं सच्चिदानन्दघनं परिमार्गितव्यमन्विष्य ज्ञातव्यमस्ति "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" इति श्रुतेः, यस्मिन् पदे गता ज्ञानेन प्रविष्टा भूयः पुनः संसाराय न निवर्त्तन्ते, कथं मार्गितव्यमित्याह तमेव यः पदशब्देनोक्तस्तमादौ भवमाद्यं पुरुषं पूर्णं प्रपद्ये शरणं गतोऽस्मीत्येवं तच्छरणतया परिमार्गितव्यं, कं तं पुरुषं यतः पुरुषान्मायामयसंसारप्रवृत्तिः पुराणी चिरन्तनी प्रवृत्तास्ति, तथा च श्रुतिः "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये" ॥ ४ ॥

कथं भूतास्तत्पदं गच्छन्तीत्याकाङ्क्षायां तत्पदं गच्छतां लक्षणान्याह—

निर्मानमोहा जितसङ्गदोषा अध्यात्मनित्या विनिवृत्तकामाः ।
द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैर्गच्छन्त्यमूढाः पदमव्ययं तत् ॥५॥

मानोऽहंकारो मोहोऽविवेकस्तौ निर्गतौ येभ्यस्ते निर्मानमोहा अहङ्काराविवेकरहितास्तथा जिताः सङ्गात्मका दोषा यैस्ते जितसङ्गदोषाः सङ्गेऽपि रागादिरहिताः, अध्यात्मनित्याः परमात्मस्वरूपालोचनतत्पराः, विनिवृत्तकामा विशेषतो निवृत्ताः कामा येषां ते, सुख-

दुःखसंज्ञैः सुखदुःखादिनामकैर्द्वन्द्वैः प्रियाप्रियशीतोष्णक्षुत्पिपासादिभिर्विमुक्ता अमूढा मोहरहिता एव तदव्ययं पदं गच्छन्ति "ब्रह्मसंस्थोऽमृतत्त्वमेति"। "तन्निष्ठस्य मोक्षोपदेशात्" इतिश्रुतिसूत्राभ्याम्॥५॥

तदेव गन्तव्यं पदं पुनर्विशिनष्टि—

न तद्भासयते सूर्यो न शशाङ्को न पावकः।
यद्गत्वा न निवर्त्तन्ते तद्धाम परमं मम॥ ६॥

यद्धाम ज्योतिस्वरूपं स्वयंप्रकाशं पदं सर्वावभासकोऽपि सूर्यो न भासयते तथा शशाङ्कश्चन्द्रः पावकोऽग्निर्यन्न भासयते "न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति श्रुतेः, यद्धाम वैष्णवं पदं गत्वा प्राप्य न निवर्त्तन्ते यच्च सूर्यादिभिर्नावभास्यते तन्मम विष्णोः परमं धाम प्रकृष्टं स्वरूपात्मकं पदम्॥६॥

ननु यद्गत्वा न निवर्तन्त इति नोपपद्यते गतेरागत्यन्तत्वात्, तदुक्तं "सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः। संयोगा विप्रयोगान्ता मरणान्तं च जीवितम्"॥ किञ्च सुषुप्तौ ब्रह्मापन्नस्यापि निवृत्तिदर्शनादिदमयुक्तमित्याशङ्कायामाह—

ममैवांशो जीवलोके जीवभूतः सनातनः।
मनः षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति॥ ७॥

ममैव परमात्मन एवांशोऽवयव एकदेश इव कल्पितो मायया जले सूर्य इव घटाकाश इव जीवलोके संसारे जीवभूतः कर्त्ता भोक्तेति प्रसिद्धो मृषैव वस्तुतः सनातनो नित्यः परमात्मस्वरूप एव, एवं यथा जलसूर्यको जलापाये सूर्यं प्राप्य न निवर्त्तते यथा

वा घटाकाशो घटाभाव आकाशं प्राप्य न निवर्त्तते तथा जीवोऽपि मम ब्रह्मणोंऽशोऽज्ञानाभावे मां प्राप्य न निवर्त्तते सुषुप्तौ तु नाज्ञानाभाव इति भावः. ईश्वरांशः कथं संसरत्युत्क्रामति चेत्याह मनःषष्ठानीन्द्रियाणि श्रोत्रादीनि प्रकृतिस्थानि स्वस्वप्रकृतौ कर्णशष्कुल्यादौ स्थितानि कर्षति समाकर्षति यदा पूर्वशरीराच्छरीरान्तरं प्राप्नोति तदेत्युत्तरेण सम्बन्धस्तथा सुषुप्तौ प्रकृतावज्ञाने स्थितानि कारणात्मना विद्यमानानि जाग्रत्कर्मोदयकाले तानि कर्षति ॥ ७ ॥

कस्मिन् काले कर्षतीत्युच्यते—

शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥ ८ ॥

ईश्वरो देहादिसङ्घातस्वामी जीवो यद् यदा चाप्युत्क्रामति शरीराद्बहिर्निर्गच्छति तदा मनःषष्ठानीन्द्रियाणि कर्षति, यद् यदा च पूर्वस्माच्छरीराच्छरीरान्तरमवाप्नोति प्राप्नोति, तदैतानि मनःषष्ठानीन्द्रियाणि गृहीत्वा संयाति सम्यग् गच्छति, तत्र दृष्टान्तो यथाऽऽशयात् पुष्पादेः स्थानाद् गन्धान् गन्धयुक्तान् सूक्ष्मांशान् गृहीत्वा वायुः संयाति तद्वत् ॥ ८ ॥



कानि पुनस्तानि किमर्थं च तानि गृहीत्वा संयातीति चेदत्राह—

श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।
अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९ ॥

श्रोत्रं चक्षुः स्पर्शनं ( त्वगिन्द्रियं ) रसनं घ्राणमेव, चकारात्प्राणकर्मेन्द्रियसमुच्चयः मनश्च षष्ठं प्रत्येकमिन्द्रियेण सहाधिष्ठायाऽऽश्रित्यैवायं देहस्थो जीवो विषयान् शब्दादीनुपसेवते भुङ्क्ते ॥९॥

देहादिभिन्नमिन्द्रियादिप्रवर्त्तकमात्मानं तथात्वेन सर्वे किमिति न पश्यन्तीति चेत्तत्राह—

उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितम् ।
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥ १० ॥

एवं देहगतं पुनर्देहादुत्क्रामन्तं पूर्वोपात्तं देहं परित्यजन्तं, देहे वा स्थितं वर्त्तमानं शब्दादीन् भुञ्जानमुपलभमानं वा गुणान्वितं सुखदुःखमोहात्मकैर्गुणैरन्वितमपि गुणयुक्तत्वादिना च दर्शनयोग्यतां प्राप्तमपि विमूढा विषयाकृष्टचित्ततयाऽतिमोहिता नानुपश्यन्ति तदतिकष्टं वर्त्तते, ये तु प्रमाणजनितज्ञानचक्षुषो विवेकिनस्त एनं विवेकदृष्ट्या देहादिविलक्षणं पश्यन्ति साक्षात्कुर्वन्ति ॥१०॥

श्रवणादिकं कुर्वन्तोऽपि केचित्पश्यन्ति केचिन्न तत्र को हेतुरिति चेदाह—

यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥ ११ ॥

आत्मनि स्वबुद्धाववस्थितं प्रतिफलितं वर्त्तमानमेनं प्रकृतमात्मानं यतन्तो यत्नं कुर्वन्तो योगिनः समाहितचित्ता एव पश्यन्ति, यतन्तोऽपि शास्त्रादिप्रमाणैर्यत्नं कुर्वन्तोऽप्यकृतात्मनोऽशोधितान्तःकरणा दुरितादनुपरता अचेतसोऽविवेकिनो नैनं पश्यन्ति ॥ ११ ॥

यत्पदं सूर्यादिकं न भासयते, यत्प्राप्याश्च प्राज्ञा न निवर्त्तन्ते, यस्य चांशा इव जीवास्तस्य सर्वात्मत्वं सूर्यादिभिरभास्यत्वे हेतुं च विवक्षुर्विभूतिसंक्षेपमाह—

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥ १२ ॥

यदादित्यगतं तेजो दीप्तिः प्रकाशोऽखिलं समस्तं जगद्भासयते, तथा यच्चन्द्रमसि यच्चाग्नौ तेजो जगदवभासकं वर्त्तते तत्सर्वं तेजो मामकं मदीयं विद्धि परमात्मशक्ति विना क्वचिदपि प्रकाशानुपपत्तेः परमात्मशक्तौ हि सर्वं प्रकाशमयं वर्त्तत इति भावः "अथवा तमेव भान्तमनुभाति सर्वम्" इत्यादि श्रुत्यनुसारेणादित्यादौ यच्चैतन्यात्मकं ज्योतिराविस्तरं वर्त्तते तन्मत्स्वरूपं विद्धि चैतन्यस्य सर्वत्र सत्त्वेऽपि सत्त्वप्राधान्ये सूर्यादावाधिक्येनाविर्भावाद्विशेषोक्तिः ॥ १२ ॥

गामाविश्य च भूतानि धारयाम्यहमोजसा ।
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥ १३ ॥

किञ्चाहमेव गां पृथिवीं पृथिवीदेवतारूपेणाविश्यौजसा कामरागविवर्जितेन बलेन भूतानि धारयामि पृथिवीं च धारयामि येन सा न नश्यत्यन्यथा विशीर्येत, तथा च मन्त्रवर्णः "येन द्यौरुग्रा पृथिवी च दृढा"। "स दाधार पृथिवीम्" इत्यादिः, ईश्वराधिष्ठिता पृथिवी न नश्यतीति भावः, किञ्च रसात्मकः सर्वरसस्वरूपो रसस्वभावः सोमश्चन्द्रो भूत्वा पृथिव्यां जाताः सर्वा ओषधीर्व्रीहियवाद्याः पुष्णामि पुष्ट्यादिमतीः करोमि ॥ १३ ॥

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ १४ ॥

अहं परमात्मैव वैश्वानरो जाठराग्निर्भूत्वा प्राणिनां प्राणवतां देहमाश्रितः शरीरं प्रविष्टः प्राणापानाभ्यां तदुद्दीपकाभ्यां समायुक्तः प्राणापानसमायुक्तः सन् चतुर्विधं भोज्यं सूपौदनादि, भक्ष्यं चणकापूपादि, लेह्यं तरलादि, चूष्यमिक्ष्वादि, सर्वमन्नमशनं पचामि पक्तिं करोमि । "अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं

पच्यते" इत्यादि श्रुतेः, भोक्ता वैश्वानरोऽग्निर्भोज्यमन्नं सोमस्तदेतदुभयमग्निसोमौ सर्वमिति पश्यतोऽन्नदोषा न भवतीति बोध्यम् ॥ १४ ॥

विभूतिमुपसंहरन् संकोचं परित्यजति—

सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च ।
वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ॥१५॥

सर्वस्य प्राणिजातस्य हृदि बुद्धावात्मतयाऽन्तर्यामितया चाहं सर्वात्मा परमेश्वरः सन्निविष्टोऽस्मि तस्मान्मत्त एव पुण्यकर्मवतां कर्मानुसारेण स्मृतिरनुभूतार्थपरामर्शो भवति तथा ज्ञानं ज्ञातव्यार्थस्यानुभवश्च भवति पापकर्मवतां तयोः स्मृतिज्ञानयोरपोहनमपगमनं च भवति, तस्मात्सर्वैर्वेदैः कर्मादिसाक्षी सर्वात्माऽहमेव वेद्योऽस्मि, किञ्च वेदान्तकृद् वेदान्तार्थसंप्रदायकृद् वेदवित् सर्ववेदार्थविदेव चाहं सर्वज्ञोऽस्मि ॥ १५ ॥

विभूतिसंक्षेपः सोपाधिक आत्मा च तद्द्वारेणोक्तः क्षराक्षरोपाधिप्रविविक्ततया निरुपाधिकस्य स्वरूपनिर्दिधारयिषया श्लोका आरभ्यन्ते तत्र सर्वमेवातीतानागताध्यायार्थजातं त्रिधा राशीकृत्याह—

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १६ ॥

द्वौ पृथक् स्वभावाविमौ प्रसिद्धौ लोके संसारे पुरुषौ पुरुषशब्दार्थौ स्तः, कौ तौ क्षर एकोऽक्षरोऽपरः, तत्र सर्वभूतानि भवनधर्मकाणि शरीराणि कार्याणि क्षरो विनश्वरः पुरुषोऽस्ति, कूटस्थो जीवात्मा क्षेत्रज्ञो योऽविद्योपाधिकः सोऽक्षर उच्यते, तथा सर्वबीजात्मा कूटो राशिरिव स्थितो वञ्चनामायादिरूपेण स्थितोऽव्यक्तोऽक्षर उच्यते, यद्यपि क्षेत्रज्ञस्य पुरुषोत्तमत्वमस्ति तथापि

विशुद्धस्य तत्र विशिष्टस्येति तस्याविद्याबीजसहितस्याक्षरत्वं सम्भवतीति ॥ १६ ॥

क्षराक्षराभ्यां विलक्षणं विशुद्धमाह—

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ १७ ॥

क्षराक्षराभ्यामुत्तम उत्कृष्टतमः पुरुषस्तु ताभ्यामन्यो विलक्षणः परश्चासावात्मा चेति परमात्मा विशुद्धप्रत्यक्चेतन उदाहृत उक्तो वेदान्तेषु यः परमात्मा लोकत्रयं सर्वं जगदाविश्य प्रविश्याधिष्ठानाधारतया सर्वं जगद्बिभर्त्ति स्वरूपसत्तया धारयति पोषयति सोऽयमीश्वरः सर्वज्ञोऽव्ययोऽविनाशी निर्विकारः सन् बिभर्त्ति॥१७॥

एवं भूतं पुरुषोत्तमत्वमात्मनो नामनिर्वचनेन दर्शयति—

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ १८ ॥

यस्मात्क्षरं संसाराश्वत्थवृक्षमतीतोऽतिक्रान्तोऽहं परमात्मा शुद्धः प्रत्यागात्माऽक्षरादपि चोक्तादुत्तम उत्कृष्ट ऊर्ध्वतमोऽतोऽहं लोके वेदे च पुरुषोत्तम इत्येवं प्रथितः प्रख्यातोऽस्मि "स उत्तमः पुरुषः" इति श्रुतिः ॥ १८ ॥

यथा निरुक्तमात्मानं ज्ञातुः फलमाह—

यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ! ॥ १९ ॥

योऽसम्मूढः सम्मोहाविवेकादिरहितो मां सर्वात्मानमीश्वरमेवं यथोक्तेन प्रकारेण पुरुषोत्तममयमहमस्मीति जानाति स्वात्मत्वेन, हे भारत ! स सर्ववित्सर्वज्ञः सन् सर्वभावेन सर्वात्मतया मां भजति सर्वात्मनीश्वरे गतेन भावेन प्रेम्णा चित्तेन वा मां सेवते ॥ १९ ॥

अध्यायार्थं स्तुवन्नुपसंहरति—

इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ ! ।
एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत ! ॥२०॥

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे पुरुषोत्तमयोगो नाम पञ्चदशोऽध्यायः ॥१५॥

इत्येतद्गुह्यगुह्यतरकर्मोपासनाशास्त्रेभ्योऽपि गुह्यं गुह्यतममत्यन्तरहस्यं शास्त्रमिदं सर्वस्य वेदस्य गीताशास्त्रस्य च सारभूतं मयोक्तमस्मिन्नध्याये "यस्तं वेद स वेदवित्, वेदैश्च सर्वैरहमेव वेद्यः" इति च, हे अनघ ! तस्मादेतत्सङ्क्षेपेणास्मिन्नध्याये प्रोक्तं शास्त्रं बुद्ध्वा ज्ञात्वा बुद्धिमानात्मज्ञो भवेन्नान्यथा हे भारत ! कृतकृत्यो मुक्तश्च स्याद् भवेत् "प्राप्यैतत्कृतकृत्यो हि द्विजो भवति नान्यथा" इति मनूक्तेः, सर्वकर्मणो ज्ञाने परिसमाप्तिश्च भगवतैवोक्तेति ॥ २० ॥

क्षराक्षरपरो ह्यात्मा शुद्धोऽस्ति पुरुषोत्तमः ।
तत्रैव मनसो योगो जायते सर्वभावदः ॥ १ ॥
सर्वात्मानं हरिं ज्ञात्वा स्वात्मानं परमेश्वरम् ।
कृतकृत्यो भवेन्मुक्तः पुरुषः पुरुषोत्तमः ॥ २ ॥
पुरुषोत्तममहं वन्दे सर्वाधारं च सर्वगम् ।
सर्वात्मानमजं शुद्धमानन्दघनमव्ययम् ॥ ३ ॥
भक्तियोगेन संसेव्य गुणातीतो भवेन्मुनिः ।
यं तं देवमहं वन्दे हरिमानन्दमव्ययम् ॥ ४ ॥

इति श्रीमत्स्वामिहनुमद्दासषट्शास्त्रिविरचितायां सारसंग्राहिकायां टीकायां पञ्चदशोऽध्यायः ॥ १५ ॥

# षोडशोऽध्यायः ( १६ )

मोघाशेत्यादिना नवमेऽध्याये दैव्यासुरी राक्षसी च प्रकृतयः सूचिताः पूर्वाध्याये चाधश्च मूलानीत्यत्र कर्मव्यङ्ग्या वासनाः संसारस्यावान्तरमूलत्वेनोक्तास्ता अपि दैव्यादिप्रकृतित्वेन त्रिधा विभक्तास्तत्र राक्षस्या आसुर्यामन्तर्भावेन "द्वया ह प्राजापत्या देवाश्चासुराश्च" इति श्रुत्यनुसारेण द्विराशीकृत्य विस्तरेण प्रदर्शनार्थोऽयमध्याय इतरवर्जनाय दैवीमादावाह—

श्रीभगवानुवाच

अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ १ ॥

अभयं सन्मार्गेऽभीरुता, सत्त्वसंशुद्धिः सत्त्वस्यान्तःकरणस्य निर्मलता निष्कपटव्यवहारादिः, ज्ञानयोगव्यवस्थितिः शास्त्रजज्ञानानुभवात्मकयोगयोर्व्यवस्थितिर्निष्ठा, एतावती मुख्या दैवी सम्पत्, दानं यथोचितान्नादीनां संविभागः, दम इन्द्रियनिग्रहः, यज्ञः श्रौतादिकर्मविशेषः, स्वाध्यायो वेदाध्ययनं, तपो वक्ष्यमाणं, आर्जवमवक्रता ॥ १ ॥

अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ।
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥ २ ॥
तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।
भवन्ति सम्पदं दैवीमभिजातस्य भारत ! ॥ ३ ॥

अहिंसा प्राणिपीडात्यागः, सत्यमप्रियानृतादित्यागः सत्यवचनं, क्रोधत्यागोऽक्रोधः, त्यागः कर्मफलाशादीनां संन्यासो दानस्योक्तत्वात् , शान्तिश्चित्तोपशमः, अपैशुनं परोक्षे परस्मै परदोषा-

प्रकाशनं, भूतेषु दया दुःखितेषु कृपा, अलोलुप्त्वं लोभाभावो विषयसन्निधानेऽपीन्द्रियाणामविक्रिया, मार्दवं मृदुता, ह्रीरकार्येषु लोकलज्जा, अचापलं व्यर्थक्रियाराहित्यम् ॥ २ ॥ तेजः प्रागल्भ्यं, क्षमा परापकारेऽपि चित्ताविकारः, धृतिर्धैर्यं, शौचं बाह्याभ्यन्तरशुद्धिः, अद्रोहो जिघांसाऽभावः, नातिमानिता स्वस्य पूज्यतातिशयभावनाऽभावः, हे भारत! एतान्यभयादीनि दैवीं सम्पदं शुद्धसत्त्वमयीं वासनासन्ततिमभिलक्ष्य जातस्य दैवविभूत्यर्हस्य भाविकल्याणस्य भवन्ति ॥ ३ ॥

हेयामासुरीं सम्पदमाह—

दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ।
अज्ञानं चाभिजातस्य पार्थ ! संपदमासुरीम् ॥ ४ ॥

दम्भो धर्मध्वजित्वं, दर्पो गर्वो धनादिनिमित्तो मदः, अभिमान आत्मन्युत्कृष्टत्वारोपः, क्रोधः प्रसिद्धश्चित्तक्षोभः, पारुष्यं परुषत्वं रूक्षवदनशीलत्वं, अज्ञानमविवेकज्ञानं मिथ्याप्रत्ययः, हे पार्थ ! आसुरीं सम्पदं रजस्तमोमयीमशुभवासनासन्ततिमभिलक्ष्य जातस्य पुरुषस्यैतानि भवन्ति, चकारौ चापल्याधृत्यादीनामुपलक्षणार्थौ ॥ ४ ॥

अनयोः सम्पदोः फलविभागमाह—

दैवी संपद्विमोक्षाय निबन्धायासुरी मता ।
मा शुचः सम्पदं दैवीमभिजातोऽसि पाण्डव ! ॥ ५ ॥

संसारबन्धनाद्विमोक्षाय दैवी सम्पद् भवति, नियमेन बन्धाय निबन्धाय चासुरी राक्षसी मताऽभिप्रेताऽस्ति, एवमुक्ते किमहं दैवीसम्पद्युक्त आसुरीसम्पद्युक्तो वेत्यन्तराशयमालक्ष्याह त्वं दैवीसम्पदमभिलक्ष्य जातोऽसि भाविकल्याणोऽसि हे पाण्डव ! तस्मा-

न्मा शुचः शोकं मा कार्षीः, अभिजातोऽसीत्यस्य प्रतिजातोऽसीत्यर्थो लक्षणे द्वितीया तथा च दैवीसम्पज्जातस्य तव लक्षणमस्तीति केचित् ॥ ५ ॥

द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च ।
दैवो विस्तरशः प्रोक्त आसुरं पार्थ ! मे शृणु ॥ ६ ॥

अस्मिँल्लोके संसारे भूतानां मनुष्याणां सर्गौ सृष्टी भूतसर्गौ द्वौ द्विप्रकारौ स्तः, तौ च दैव आसुरश्च पूर्वोक्त एव ज्ञेयः, सृज्यत इति सर्गो भूतान्येव सृज्यमानानि सर्ग उच्यते तत्र द्वौ प्रकारौ स्तः, "द्वया ह प्राजापत्या दैवाश्चासुराश्च" इति श्रुतेः, उक्तयोरनुवादे प्रयोजनमाह—दैवो भूतसर्गोऽभयं सत्त्वसंशुद्धिरित्यादिना विस्तरशो विस्तरप्रकारैः प्रोक्तः कथितो न त्वासुरोऽतस्तत्परिवर्जनाय विस्तरश उच्यमानमासुरं सर्गं मे मम वचनाच्छृणु श्रुत्वाऽवधारय हे पार्थ ! ॥ ६ ॥

आऽध्यायपरिसमाप्तेरासुरीसम्पत्प्राणिविशेषणत्वेन प्रदर्श्यते परिवर्जनाय—

प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥ ७ ॥

विहितां प्रवृत्तिं तद्विषयं तद्विधायकं शास्त्रं चासुरा जना न विदुर्न जानन्ति ज्ञात्वाऽपि नानुतिष्ठन्ति, एवं निवृत्तिं प्रतिषिद्धां क्रियां तद्विषयं तद्बोधकं शास्त्रं न विदुः, किञ्च न शौचं नापि चाऽऽचारो न सत्यं तेषु विद्यते, तस्मादशौचा अनाचारा मायाविनोऽनृतवादिनो ह्यसुरा भवन्तीति ॥ ७ ॥

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसम्भूतं किमन्यत्कामहैतुकम् ॥ ८ ॥

किञ्चासत्यं यथा वयमनृतप्रायास्तथेदं सर्वं जगदसत्यमबाधितप्रमाणशून्यं च, तस्मान्न विद्यते धर्माधर्मौ प्रतिष्ठा व्यवस्थाहेतुर्यस्य तदप्रतिष्ठं, तथा नास्ति धर्माधर्माद्यपेक्षः शासितेश्वरोऽस्य तदनीश्वरं तेऽसुरा जगदाहुः किञ्चापरस्परमपरश्चपरश्च मिथुनं तस्मात् सम्भूतं, परापरशब्दावन्यशब्दपर्यायौ, कामप्रयुक्तयोः स्त्रीपुरुषयोरन्योन्यसङ्गाज्जातं सर्वं जगदाहुः, तस्मात्काम एव हेतुर्यस्य तत्कामहेतुकं किमन्यत्कारणमदृष्टादिकं जगतो नास्त्येव हि तत् स्वभावसिद्धमेव जगदस्ति तद्वैचित्र्यं च, किंवा गुणकर्मादीनां परस्परेभ्यो न सम्भूतं तस्मादपरस्परसम्भूतमित्यादि ॥ ८ ॥

एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ ९ ॥

एतामुक्तां लोकायतिकानां नास्तिकानां दृष्टिं दर्शनमवष्टभ्याश्रित्य नष्टात्मानो नष्टस्वभावा भ्रष्टपरलोकसाधना अल्पबुद्धयोऽल्पविषयविषयाल्पैव बुद्धिर्येषां तेऽल्पमतय उग्रकर्माणः क्रूरकर्माणो हिंस्रा जगतोऽहिताः शत्रवः सन्तो जगतः क्षयाय प्रभवन्ति जायन्ते तस्मादियं दृष्टिः श्रेयोऽर्थिभिः सर्वथैव हेयास्ति ॥ ९ ॥

काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।
मोहाद् गृहीत्वासद्ग्राहान्प्रवर्त्तन्तेऽशुचिव्रताः ॥१०॥

दुष्पूरं पूरयितुमशक्यं काममभिलाषमाश्रित्य दम्भमानमदान्विता मिथ्याधर्मख्यापनेन पूज्यत्वाभिनिवेशेन स्वोत्कृष्टत्वारोपेण युक्ता अत एवाशुचिव्रता अशुचीनि व्रतानि श्मशानमद्यमांसादिविषयाणि येषां तेऽसद्ग्राहानशुभनिश्चयान् दुराग्रहान् मोहादविवेकाद् गृहीत्वा लोके प्रवर्त्तन्ते दृष्टफले न तु धर्मादाविति ॥ १० ॥

चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।
कामोपभोगपरमा एतावदिति निश्चिताः ॥ ११ ॥

प्रलयान्तां मरणान्तां यावद्देहभाविनीमपरिमेयामपरिमेयविषयत्वाद्यस्या इयत्ता न परिमातुं शक्यते तां चिन्तां चोपाश्रिता सदा चिन्तापराः किञ्च कामोपभोगपरमाः काम्यानां विषयाणामुपभोग एव परमः पुरुषार्थो येषां ते, एतावद् दृष्टमेव सुखं नान्यदतो भोग्यं भोक्ता वा विद्यत इत्येवं निश्चिता निश्चयवन्तोऽर्थसञ्चयानीहन्त इति संबन्धः, तथा च वार्हस्पत्यं सूत्रं "चैतन्यविशिष्टः कायः पुरुषः, "काम एवैकः पुरुषार्थः" इति ॥ ११ ॥

आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।
ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान् ॥ १२ ॥



अशक्योपायार्थविषया अप्राप्तार्थविषया आशा एव पाशा इव बन्धनहेतुत्वात्तेषां शतैराशापाशशतैर्बद्धा नियन्त्रिताः प्रार्थनाशतैराकृष्यमाणाः कामक्रोधौ परमयनं पर आश्रयो येषां ते कामक्रोधपरायणाः कामभोगार्थं कामभोगप्रयोजनाय न तु धर्मार्थमन्यायेन परस्वहरणादिनाऽर्थसञ्चयान् धनराशीन् कर्त्तुमीहन्ते चेष्टन्ते लोभग्रस्ताः सन्तः ॥ १२ ॥

असुराणामभिप्रायमाह—

इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ १३ ॥

इदं गोहिरण्यादिधनं मयाऽनेनोपायेनाद्येदानीं लब्धमिमं मनोरथं मनःप्रीतिकरं पदार्थं प्राप्स्ये प्राप्स्यामि, मन एव रथो रथ इव वा यस्य स मनोरथः कामस्तेन तद्विषयो गृह्यते, इदं धनं

मेऽस्तीदमपि मे भविष्यति तेनाहं धनी विख्यातः स्यामीत्येवं धनतृष्णाकुलाः पतन्तीति संबन्धः ॥ १३ ॥

मनोराज्यव्याजेन धनतृष्णां प्रपञ्च्य क्रोधं प्रपञ्चयति—

असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी ॥ १४ ॥

असावमुकनामा शत्रुर्दुर्जयो मया हतः, अपरानन्यान् वराकानपि हनिष्ये, यतो न केवलं मानुषोऽहं किन्तु बहुधेश्वरोऽहं यतो भोगी सर्वभोगोपकरणवान् सिद्धः पुत्रादिभिः सम्पन्नः कृतकृत्यो बलवानहमत एव सुखी नान्यः कश्चिन्मत्तुल्य इत्यादि ॥ १४ ॥

आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥१५॥

आढ्या धनी, अभिजनवान् कुलीनो विख्यातजनवानहमस्मि धनाढ्येन कुलीनेन च मया सदृशोऽन्यः कोऽस्ति मत्तुल्यो नास्ति कोऽपि, तस्मादहं यक्ष्ये दीनेभ्यो दास्यामि मोदिष्ये यागादिजन्यं हर्षं प्राप्स्यामि, इत्येवमज्ञानेन विमोहिता भवन्ति ॥ १५ ॥

तेषां कुगतिमाह—

अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥ १६ ॥

उक्तप्रकारैरनेकैश्चित्तैः सङ्कल्पैर्विभ्रान्ता विविधं भ्रान्ता अनेकचित्तविभ्रान्ता मोहोऽविवेकोऽज्ञानमेव जालमिव तेनावृता मोहजालसमावृताः पक्षिणः सूत्रजालेनेव परवशीकृताः कामानां विषयाणां भोगेषु प्रसक्ताः सन्तस्तेनोपचितकल्मषास्तेऽशुचौ नरके पतन्ति ॥ १६ ॥

ननु तेषामपि केषांचिद्यागादौ प्रवृत्तिदर्शनात्कथं नरके पतनमिति चेत्तत्राह—

आत्मसम्भाविताः स्तब्धा धनमानमदान्विताः ।
यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥ १७ ॥

सर्वगुणविशिष्टा वयमित्यात्मनैवात्मनि सम्भाविताः पूज्यतां प्रापिता आत्मसम्भाविता न तु साधुभिः, अत एव स्तब्धा अप्रगतात्मानोऽनम्राः, धननिमित्तो यो मानोऽहङ्कारो मदो गर्वः परावज्ञाहेतुस्ताभ्यामन्विता धनमानमदान्वितास्ते नामयज्ञैर्नाममात्रैर्नामहेतुकैर्यज्ञै यजन्ते यतो दम्भेनाविधिपूर्वकं यथा भवति तथा यजन्ते॥ १७॥

अहङ्कारं बलं दर्पं कामं क्रोधं च संश्रिताः ।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १८ ॥

अहङ्कारं विद्यमानाविद्यमानगुणैरात्मन्यारोपितैर्महत्त्वाभिमानं, बलं पराभिभवनिमित्तं शरीरादिसामर्थ्यं कामरागान्वितं, दर्पं धर्मातिक्रमहेतुं परावज्ञादिकारणं, कामं स्त्र्यादिविषयं क्रोधं चान्मात्सर्यादिकं संश्रिताः किञ्च तदाश्रयणेनात्मपरदेहेषु स्वपरशरीरेषु मामीश्वरं तत्तद्बुद्धिकर्मसाक्षिणं द्विषन्तो मच्छासनं शास्त्रमतिवर्त्तन्तोऽभ्यसूयकाः सन्मार्गस्थानां गुणेषु दोषारोपकाः सन्तो यजन्ते ॥ १८ ॥

उक्तविशेषणवतामसुराणां गतिमाह—

तानहं द्विषतः क्रूरान्संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ १९ ॥

आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ! ततो यान्त्यधमां गतिम् ॥ २० ॥

साधून् मां च द्विषतः क्रूरान् हिंस्रकानजस्रं सततमशुभानशुभकर्मकारिणोऽतएव नराधमान् नरेष्वतिनिकृष्टान् तान् सन्मार्गप्रतिपक्षभूतानहं कर्मफलदाता परमेश्वरोऽजस्रं निरन्तरं संसारेषु जन्ममृत्युमार्गेषु तत्राप्यासुरीषु सिंहव्याघ्रादिष्वेव योनिषु क्षिपामि तत्कर्मभावनाद्यनुसारेणेति ॥ १९ ॥ आसुरीं योनिमापन्नाः प्रतिपन्ना मूढा अविवेकिनोऽधमा जन्मनि जन्मनि प्रतिजन्माऽऽसुरीं योनिमेव प्राप्ताः सन्तो मामीश्वरमप्राप्यानासाद्यैव हे कौन्तेय ! तत आसुरीयोनितोऽप्यधमां निकृष्टां गतिं यान्ति स्थावरादिभावं प्राप्नुवन्तीत्यर्थः ॥ २० ॥

अनन्तभेदवतीयमासुरीसम्पत्पुरुषायुषेणापि परिहर्तुमशक्याऽतः सर्वभेदो यस्मिन्नन्तर्भवति यत्परिहारेण परिहृतश्च तत्सर्वानर्थमूलभूतं दर्शयति श्रीभगवान्—

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ २१ ॥

त्रिविधं त्रिप्रकारमिदं प्रसिद्धं नरकस्य प्राप्तौ द्वारं साधनमात्मनो नाशनं यद्द्वारं प्रविशन्नेवात्मा नश्यति न कस्मैचित्पुरुषार्थाय योग्यो भवति, तस्मादत्यन्ताधमयोनिप्रापकं किं तत् कामः क्रोधस्तथा लोभ इति त्रिविधं तत् तस्मादेतत् त्रयं श्रेयोऽर्थी त्यजेद्यस्मादेतत्कामादिकमात्मनो नाशनमस्ति ॥ २१ ॥

त्यजतो विशिष्टं फलमाह—

एतैर्विमुक्तः कौन्तेय ! तमोद्वारैस्त्रिभिर्नरः ।
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥ २२ ॥

एतैः कामादिभिस्त्रिभिस्तमोद्वारैस्तमसो दुःखमोहात्मकस्य नरकस्य द्वारैः श्रेयःप्रतिबन्धकैर्विमुक्तो विरहितो नर आत्मनः श्रेयः

कल्याणं हितं शुभमाचरति प्रतिबन्धकाभावात्, हे कौन्तेय ! ततस्तस्मादाचरणात्परां गतिं मोक्षं याति लोकेऽपि श्रेयः प्राप्नोति ॥२२॥

यस्मादश्रेयोऽनाचरणस्य श्रेय आचरणस्य च शास्त्रमेव निमित्तं तयोः शास्त्रैकगम्यत्वात्तस्मात्—

यः शास्त्रविधिमुत्सृज्य वर्त्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ २३ ॥

यः पुरुषः शास्त्रविधिं वेदादिसच्छास्त्रस्य विधिमाज्ञां विधिनिषेधाख्यां प्रवर्त्तनामुत्सृज्य त्यक्त्वा कामकारतः कामप्रयुक्तः कामस्य करणं कामकारस्तेन स्वेच्छामात्रेण वर्त्तते विहितं त्यक्त्वा निषिद्धं करोति स सिद्धिं पुरुषार्थयोग्यतां शुद्धिं नावाप्नोति नाप्यस्मिल्लोके सुखं नापि परां गतिं स्वर्गं मोक्षं वा प्राप्नोति ॥ २३ ॥

यस्मादेवम्—

तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ २४ ॥

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे दैवासुरसम्पद्विभागयोगो नाम षोडशोऽध्याय ॥१६॥

तस्मात्ते श्रेयोऽर्थिनो दैवीसम्पदमभिजातस्य कार्याकार्यव्यवस्थितौ कर्तव्याकर्तव्यव्यवस्थायां शास्त्रं प्रमाणं ज्ञानसाधनमस्ति, अतः शास्त्रेण विधानं शास्त्रविधानं कुर्यान्न कुर्यादित्येवं लक्षणं प्रवर्त्तनानिवर्तनारूपं तेनोक्तं शास्त्रविधानोक्तं कर्म विहितं प्रतिषिद्धं वा ज्ञात्वा निषिद्धं वर्जयन्निह कर्माधिकारभूमौ त्वं स्वकर्म कर्तुमर्हसि कामादिकं दोषमूलं त्यक्त्वैवेति भावः ॥ २४ ॥

सम्पदमासुरीं दैवीं विभागेन विबुध्य वै ।
दैवीसम्पत्तियोगेन मुक्तये कल्पते जनः ॥ १ ॥

दम्भदर्पादिकं हित्वा ह्यहिंसादिपरायणः ।
सत्त्वशुद्ध्यादिभिर्युक्तो निश्चितमभयं श्रयेत् ॥ २ ॥
अभीतो ज्ञानयुक्तश्च शौचाचारादिसंयुतः ।
कामक्रोधादिभिर्मुक्तो योगयुक्तो हि जायते ॥ ३ ॥

इति श्रीमत्स्वामिहनुमद्दासषट्शास्त्रिविरचितायां सारसंग्राहिकायां टीकायां षोडशोऽध्यायः ॥ १२ ॥

---

# सप्तदशोऽध्यायः (१७)

अर्जुन उवाच

ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः ।
तेषां निष्ठा तु का कृष्ण ! सत्त्वमाहो रजस्तमः ॥ १ ॥

तस्माच्छास्त्रं प्रमाणं त इति प्रश्नबीजमुपलभ्यार्जुनः पृच्छति ये शास्त्रेति—अयं भावो ये शास्त्रविधिं ज्ञात्वाऽपि, अश्रद्धया तमुत्सृज्य कामकारतः प्रवृत्तास्ते नास्तिका असुराः सर्वपुरुषार्थायोग्याः, ये तु शास्त्रविधिं ज्ञात्वा तदनुसारेण श्रद्धया निषिद्धं वर्जयन्तो विहितमनुतिष्ठन्ति ते सर्वपुरुषार्थार्हाः सुरा इति पूर्वाध्यायान्ते प्रसिद्धं, ये तु शास्त्रविधिमालस्यादिवशादुत्सृज्य तदध्ययनादिकमुपेक्ष्य वृद्धव्यवहारादेव श्रद्धयाऽन्विताः सन्तो देवादीन् यजन्ते तेषां देवासुरविशेषणरहितानां निष्ठा स्थितिराश्रयः का किंस्वरूपा किं तेषां सत्त्वमवस्थानं श्रद्धायाः सात्त्विकत्वात्, अथवा रजः किम्वा तमः क्लेशबुद्ध्याऽऽलस्येन च शास्त्रविधित्यागस्य राजसतामसत्वात्, हे कृष्ण ! तैः कृता पूजा सात्त्विकी राजसी तामसी वा कीदृशी तेषां प्रवृत्तिर्यजनादिक्रियाव्यवस्थितिरिति ॥१॥

सामान्यविषयोऽयं प्रश्नो नाप्रविभज्योत्तरमर्हतीतियथाप्रश्नमुत्तरम्—

श्रीभगवानुवाच

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।
सात्त्विकी राजसी चैव तामसी चेति तां श्रृणु ॥ २ ॥

शास्त्रविधिं ज्ञात्वा श्रद्धया तदनुसारेण कर्मादिकुर्वतां सात्त्विकयेव श्रद्धा भवति, परन्तु यां श्रद्धां त्वं पृच्छसि सा देहिनां प्राणिनां श्रद्धा स्वभावजा जन्मान्तरकृतधर्माधर्मसंस्कारो मरणकालेऽभिव्यक्तः स्वभावस्तस्माज्जायते सा च श्रद्धा सात्त्विकी राजसी तामसी चेति त्रिविधा त्रिप्रकारा भवति धर्मादिसंस्कारस्य त्रैविध्यात् तां श्रृणु ॥२॥

वासनानिमित्तं त्रैविध्यमुक्त्वोपादाननिमित्तमपि त्रैविध्य वदन् तन्मयस्य पुरुषस्य त्रैविध्यमाह—

सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ! ।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥ ३ ॥

सर्वस्य प्राणिजातस्य श्रद्धाश्रयस्य सत्त्वानुरूपा सात्त्विकादिसंस्कारोपेतान्तःकरणानुरूपा श्रद्धा भवति हे भारत ! श्रद्धात्रैविध्यात्पुरुषनिष्ठायां किं भवतीति चेदाह—अयं पुरुषः संसारी जीवः श्रद्धामयः श्रद्धाप्रायो भवति तस्माद्यो यच्छ्रद्धो या श्रद्धा सात्त्विकयादिर्यस्य जीवस्य स यच्छ्रद्धो जीवः स एव तत्तच्छ्रद्धानुरूपस्त्रिविधो भवति ॥ ३ ॥

निष्ठावतां त्रैविध्यात्कार्येण लिङ्गेन सत्त्वादिनिष्ठानुमेयेत्याह—

यजन्ते सात्त्विका देवान्यक्षरक्षांसि राजसाः
प्रेतान्भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥ ४ ॥

सात्त्विका जनाः शास्त्रादिरहिता अपि श्रुत्वा देवान् वस्वादीन् यजन्ते पूजयन्ति, राजसा यक्षरक्षांसि यक्षान् कुबेरादीन् राक्षसान्

निर्ऋतिप्रभृतीन् यजन्ते, तेभ्योऽन्ये तामसा जनाः प्रेतान् पिशाचविशेषान् भूतगणान् सप्तमातृकादीन् यजन्ते ॥ ४ ॥

एवं कार्यतो निर्णीतानां सत्त्वादिनिष्ठानां मध्ये सत्त्वनिष्ठस्य दौर्लभ्यं रजस्तमोनिष्ठानां बाहुल्यं च ज्ञापयितुमाह—

अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।
दम्भाहङ्कारसंयुक्ताः कामरागबलान्विताः ॥ ५ ॥

दम्भाहङ्काराभ्यां संयुता दम्भाहङ्कारसंयुताः कामरागाभ्यामभिलाषाऽऽसक्तिभ्यां कृतं यद्बलमाग्रहस्तेनान्विताः कामरागबलैर्वाऽन्विताः कामरागबलान्विता ये जना अशास्त्रविहितं शास्त्रेण न विहितं घोरं प्राणिनामात्मनश्च पीडाकरं तपस्तप्यन्ते निर्वर्त्तयन्ति तानिति सम्बन्धः ॥ ५ ॥

रजोनिष्ठान् प्राधान्येन प्रदर्श्य तमोनिष्ठान् प्राधान्येन विशिनष्टि—

कर्षयन्तः शरीरस्थं भूतग्राममचेतसः ।
मां चैवान्तःशरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥ ६ ॥

शरीरस्थं भूतग्रामं करणसमुदायरूपेण परिणतं भूतसमूहं कर्षयन्तो वृथोपवासादिना कृशीकुर्वन्तोऽन्तःशरीरस्थं तत्कर्मबुद्धिसाक्षिभूतं मां चैव कर्षयन्तो मदनुशासनातिक्रमणं कुर्वन्तोऽचेतसोऽविवेकिनो ये तानासुरनिश्चयानासुरा निश्चयो येषां तथाभूतान् विद्धि परिहाराय ॥ ६ ॥

तत्तदाहारेषु प्रीत्यतिरेकेण सात्त्विकत्वादिकं यज्ञादीनामपि गुणभेदेन त्रिविधत्वं ज्ञात्वा सात्त्विका ग्राह्या अन्ये च परिवर्ज्या इति बोधयितुमाह—

आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ।
यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ ७ ॥

सर्वस्य भोक्तुराहारोऽपि भक्ष्यादिरूपस्त्रिविधः प्रिय इष्टो भवति दृष्टाऽर्थस्तथाऽदृष्टार्थो यज्ञस्त्रिविधो भवति प्रियस्तथा तपो दानं च त्रिविधमेव प्रियं भवति तेषामिमं वक्ष्यमाणं भेदं शृणु ॥७॥

आयुः सत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ॥ ८ ॥

आयुर्जीवनं, सत्त्वं धैर्यवीर्योत्साहादि, बलं शरीरसामर्थ्यमारोग्यं नीरोगता, सुखमन्तराह्लादस्तृप्तिः, प्रीतिरभिरुचिस्तृप्तिजन्या प्रसन्नता, तेषामायुःसत्त्वादीनां विवर्द्धयन्तीति विवर्द्धना विशेषेण वृद्धिहेतव आयुःसत्त्वादिविवर्द्धनास्ते च रस्या रसोपेताः सरसाः स्निग्धाः स्नेहवन्तः स्थिरा देहे चिरकालस्थायिनः सारांशेन स्थित्वा देहोपकारकाः, हृद्या हृदयप्रियाः सर्वदोषशून्या आहाराः सात्त्विकानां प्रिया इष्टा भवन्ति तैः सात्त्विका ज्ञेयाः ॥ ८ ॥



कट्वम्ललवणात्युष्णातीक्ष्णरूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥ ९ ॥

अतिशब्दः कट्वादिषु सर्वत्र सम्बन्धनीयः, कटुस्तिक्तः कटुरसस्य तीक्ष्णपदेनोक्तत्वात्, तथा चातिकटुर्निम्बादिः, अत्यम्लादिः प्रसिद्धः, अतितीक्ष्णो मरीचादिः, अतिरूक्षः स्नेहशून्यः कङ्गुकोद्रवादिः, अतिविदाही राजिकासर्षपादिः, दुःखं तात्कालिकीं पीडां शोकं पश्चाद्भाविदौर्मनस्यमामयं रोगं च प्रयच्छन्तीति दुःखशोकामयप्रदा आहारा राजसस्य पुरुषस्येष्टा भवन्ति ॥ ९ ॥

यातयामं गतरसं पूति पर्युषितं च यत् ।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥ १० ॥

यातयामं मन्दपक्वं निर्वीर्यस्य गतरसेनोक्तत्वात्, पूति दुर्गन्धि,

पर्युषितं पक्वं सद्द्राऽत्यतीतं स्नेहाक्तं विना "अन्नं पर्युषितं भोज्यं स्नेहाक्तं चिरसंस्थितम्" इति याज्ञवल्क्यस्मृतेः, उच्छिष्टं स्वपरभुक्तावशिष्टं चकाराभ्यां मादकमपथ्यं च समुच्चीयते, अमेध्यमपवित्रं यज्ञाद्यनर्हमशुचिमांसादि, एतादृशं भोजनं तामसानां प्रियं भवति। तामसभोजनदोषस्यासंख्येयत्वात्प्रसिद्धत्वाच्च नोक्तम् ॥ १० ॥

क्रमप्राप्तं त्रिविधं यज्ञमाह—

अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥ ११ ॥

विधिदृष्टो यथाशास्त्रं निश्चितो यो यज्ञा यष्टव्यमेवेति यज्ञस्वरूपनिर्वर्त्तनमेव कर्तव्यं यज्ञानुष्ठानमेव कार्यं नान्यत्फलं साधनीयमित्येवं मनः समाधायाफलाकाङ्क्षिभिरफलार्थिभिरिज्यते निर्वर्त्यतेऽनुष्ठीयते न तु स्वार्थसाधनाय स यज्ञः सात्त्विक उच्यते ॥ ११ ॥

अभिसन्धाय तु फलं दम्भार्थमपि चैव यत् ।
इज्यते भरतश्रेष्ठ ! तं यज्ञं विद्धि राजसम् ॥ १२ ॥
विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १३ ॥

फलं काम्यं स्वर्गादि, अभिसन्धायोद्दिश्य न तु कर्तव्यपालनार्थं, दम्भार्थं लोके धार्मिकत्वख्यापनार्थमपि यदिज्यते यद्यजनं क्रियते हे भरत श्रेष्ठ ! तं यज्ञं राजसं विद्धि ॥ १२ ॥ विधिहीनं शास्त्रोक्तविधिशून्यमसृष्टान्नं न सृष्टं दत्तमन्नं यस्मिन् सोऽसृष्टान्नस्तमन्नदानरहितं स्वरतो वर्णतश्च मन्त्रहीनमदक्षिणं यथोक्तदक्षिणावर्जितं श्रद्धाविरहितं यज्ञं तामसं परिचक्षते तमोनिर्वृत्तं कथयन्ति शिष्टाः ॥ १३ ॥

तपसः सात्त्विकादिभेदं निरूपयितुं सर्वस्य तपसस्त्रिविधं स्वरूपं प्रथममाह—

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ १४ ॥

"स्वाहा स्वधाऽमृतभुजो देवाः सत्यार्जवप्रियाः" ( म० भा० अनु० ११५।१७ ) इत्यादिलक्षणवन्तो देवा ब्रह्मविष्णवादयः "तपः श्रुतं च योनिश्चाप्येतद् ब्राह्मणकारणम् । त्रिभिर्गुणैः समुदितस्ततो भवति वै द्विजः ॥ (भा० अनु० १२१।७) योनिः पूर्वसंस्कारः, इत्यादिलक्षणवन्तो द्विजाश्च, गुरवः पित्राचार्यादयः प्राज्ञा गुरुव्यतिरिक्ता अन्येऽपि तत्त्वविदस्तेषां पूजनं प्रणामशुश्रूषादिभिः सत्करणं शौचादिकं च शारीरं शरीरप्रधानैः सर्वैरेवकार्यकरणैः कर्त्रादिभिः साध्यं शारीरं तप उच्यते "पञ्चैते तस्य हेतवः" इति वक्ष्यमाणत्वात् ॥१४॥

अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यासनं चैव वाङ्मयं तप उच्यते ॥ १५ ॥

अनुद्वेगकरं प्राणिनामदुःखकरं, सत्यं प्रमाणमूलमबाधितार्थं, प्रियं दृष्टार्थं श्रोतुस्तत्कालश्रुतिसुखं, हितमदृष्टार्थं परिणामपथ्यं च यद् वाक्यमत्र चकारो विशेषणानां समुच्चयार्थस्तेनानुद्वेगकरत्वादिविशेषणचतुष्टयेन विशिष्टं नत्वेकेनापि न्यूनं यत्तदेव तपः, यथाशान्तो भव वत्स ! स्वाध्यायं योगं चानुतिष्ठ तथा ते श्रेयो भविष्यतीति, सविधि स्वाध्यायाभ्यसनं चैव वाङ्मयं वाक्प्रधानं तप उच्यते ॥ १५ ॥

मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ १६ ॥

मनःप्रसादो मनसः शान्तिः स्वच्छतापादनं, सौम्यत्वं सौम-

नस्यं सर्वलोकहितैषित्वं, मौनं वाक्संयमस्य मनःसंयमपूर्वकत्वा-द्वाग्विषयो मनःसंयमो मौनं कार्येण कारणमुच्यते, आत्मविनिग्रहः सर्वतः सामान्यतो मनोनिरोधः, भावसंशुद्धिः परैर्व्यवहारकालेऽमायावित्वमित्येतन्मानसं तप उच्यते ॥ १६ ॥

कायिकादिभेदेनोक्तानां सात्त्विकादिभेदेन त्रैविध्यमाह—

श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः ।
अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥ १७ ॥

तत्पूर्वोक्तं त्रिविधं तपः परयोत्कृष्टया श्रद्धयाऽऽस्तिक्यबुद्ध्याऽफलाकाङ्क्षिभिः फलेच्छारहितैर्युक्तैः समाहितैः सिद्ध्यसिद्ध्योर्निर्विकारैर्नरैरनुष्ठातृभिस्तप्तमनुष्ठितं सात्त्विकं परिचक्षते कथयन्ति शिष्टाः॥१७॥

सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥ १८ ॥

सत्करणं सत्कारः स्तुतिः, माननं मानोऽभिवादनादि, पूजा पादप्रक्षालनार्चनादि तदर्थं दम्भेन धर्मध्वजित्वेन च यत्तपः क्रियते तद्राजसमिह लोके प्रोक्तं तच्च चलं क्षणिकफलमध्रुवं कादाचित्कफलं निश्चितफलशून्यं पारलौकिकफलशून्यं च ॥ १८ ॥

मूढग्राहेणात्मनो यत्पीडया क्रियते तपः ।
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥ १९ ॥

मूढग्राहेणाविवेकनिश्चयेनाविवेकातिशयकृतेन दुराग्रहेणात्मनो देहादेः पीडया यत्तपः क्रियते परस्योत्सादनार्थमन्यस्य विनाशार्थं वा यत् क्रियते तत्तामसमुदाहृतं कथितं शिष्टैः ॥ १९ ॥

क्रमप्राप्तस्य दानस्य त्रैविध्यं दर्शयति—

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥ २० ॥

दातव्यमित्येवं मनः कृत्वा यद्दानं देयवस्तु—अनुपकारिणे प्रत्युपकाराऽसमर्थाय प्रत्युपकारसमर्थायापि निरपेक्षं दीयते पुण्ये देशे काले पात्रे च तद्दानं सात्त्विकं स्मृतं कथितं, प्रथमदानशब्दः कर्मव्युत्पत्त्या देयवस्तुपरः, चकारानुकृष्टस्तु भावव्युत्पत्त्या समर्पणपरस्तेन देयभूतकर्मसंयोगाद्' चतुर्थी भवति, द्वितीयस्तु त्यागक्रियावाची, तेन तत्संयोगे न चतुर्थी कर्मणा यमभिप्रैतीत्यस्याप्रवृत्तेरिति ॥ २० ॥

यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥ २१ ॥

यत्तु दानं देयं वस्तु प्रत्युपकारार्थं कालान्तरेऽयं मामुपकरिष्यतीति बुद्ध्या, स्वर्गादिफलमुद्दिश्य वा यत्पुनर्दानं दीयते परिक्लिष्टं खेदयुक्तं पश्चात्तापादिसहितं यथा स्यात्तथा दीयते तद्दानमर्पणं राजसं दानं स्मृतम् ॥ २१ ॥

अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥ २२ ॥

अदेशकाले, अपुण्ये देशेऽशुचिकाले, अपात्रेभ्यो मूर्खतस्करादिभ्यो यद्दानं वस्तु दीयते, देशादिसम्पत्तावप्यसत्कृतं सत्कारादिरहितमवज्ञातं पात्रपरिभवयुक्तं च यद्दानं तद्दानं तामसमुदाहृतम् ॥२२॥

आहारादीनां त्रैविध्यमुक्तं तत्र विहितानां सात्त्विकानां यज्ञादीनामदृष्टार्थानां प्रमादाद्वैगुण्ये सति तत्साद्गुण्यकरणायायमुपदेश उच्यते—

ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ २३ ॥

ॐ तत्सदित्येष निर्देशो निर्दिश्यतेऽनेनेति निर्देशो नामपाठो ब्रह्मणः परमात्मनस्त्रिविधः स्मृतश्चिन्तितो वेदान्तेषु "ओमिति ब्रह्म" "तदिति वा एतस्य महतो भूतस्य नाम भवति" "सदेव सोम्य !" इत्यादिषु विद्वद्भिः, तेन निर्देशेन व्यपदेशेन ब्राह्मणा वेदाश्च यज्ञाश्च पुरा विहिता निर्मिताः प्रकाशिता इति निर्देशस्तुत्यर्थमुच्यते ।।२३।।

यस्मादोंतत्सदिति ब्रह्मणो निर्देशो यस्माच्च ब्राह्मणादीनां कारणम्—

तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्त्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ।। २४ ।।

तस्मादोमित्युदाहृत्योच्चार्य ब्रह्मवादिनां वेदवादिनां विधानोक्ताः शास्त्रचोदिता यज्ञादिरूपाः क्रियाः सततं सर्वदा प्रवर्त्तन्ते प्रकर्षेण वर्त्तन्ते वैगुण्यराहित्येन सिद्ध्यन्ति ।। २४ ।।

ओमिति नाम्नो विनियोगमुक्त्वा तदित्यस्य विनियोगमाह—

तदित्यनभिसन्धाय फलं यज्ञतपःक्रियाः ।
दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ।।२५।।

मोक्षकाङ्क्षिभिर्मोक्षार्थिभिर्मुमुक्षुभिः कर्मणः फलमनभिसन्धाय, तदिति ब्रह्माभिधानमुच्चार्य यज्ञतपःक्रिया यज्ञक्रियास्तपःक्रियाश्च विविधा दानक्रियाश्च क्रियन्ते निर्वर्त्यन्ते ।। २५ ।।

तृतीयनाम्नो विनियोगमाह—

सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ।
प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ ! युज्यते ।। २६ ।।
यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।
कर्म चैव तदर्थीयं सदित्येवाभिधीयते ।। २७ ।।

सद्भावेऽसतः सत्त्वे यथाऽविद्यमानस्य पुत्रस्य जन्मनि, तथा साधुभावेऽसद्वृत्तस्यासाधोः साधुत्वे सद्वृत्तितायां सदित्येतद् ब्रह्मणोऽभिधानं प्रयुज्यते, हे पार्थ ! तथा प्रशस्ते कर्मणि माङ्गलिके विवाहादौ च सच्छब्दः प्रयुज्यते ॥ २६ ॥ यज्ञे यज्ञकर्मणि तपसि दाने च या स्थितिस्तत्परतयावस्थितिर्निष्ठा स च सदित्युच्यते, तदर्थीयं यज्ञदानतपोऽर्थीयं यद्वा यस्याभिधानत्रयं प्रकृतं तदर्थीयमीश्वरार्थीयं कर्म च सदित्येवाभिधीयते, तदेतद्यज्ञदानादिकर्म सात्त्विकं विगुणमपि श्रद्धापूर्वकं ब्रह्मणोऽभिधानप्रयोगेण सगुणं सात्त्विकं सम्पादितं भवति तस्मान्नामत्रयमभिधेयमिति ॥ २७ ॥

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ ! न च तत्प्रेत्य नो इह ॥ २८ ॥

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे श्रद्धात्रयविभागयोगो नाम सप्तदशोऽध्यायः ॥१७॥

यज्ञादौ सर्वत्र श्रद्धायाः प्रधान्यादश्रद्धया कृतं हुतं हवनमग्नौ, दत्तं दानं पात्रेभ्योऽपि तपश्च यत् तप्तमनुष्ठितं यच्चान्यत्कर्म स्तुतिनमस्कारादिकृतं हे पार्थ ! तत्सर्वं श्रद्धारहितमसदित्युच्यते निष्फलमित्यर्थः, सत्प्राप्तिसाधनास्तिक्यरहितत्वात्तदश्रद्धाकृतं न च प्रेत्य परलोके फलाय भवति नो इह नापीह लोके यशसे भवति साधुभिर्निन्दितत्त्वात् विहिते कर्मणि श्रद्धावानेवाधिकारी भवति, निषिद्धं त्वश्रद्धयाऽपि कृतं स्वफलं ददात्येव तत्र श्रद्धाया अधिकारिविशेषणत्वाभावात् तदनेन शास्त्रानभिज्ञानामपि श्रद्धावतां राजसतामसाहारादिपरिवर्जनेन सात्त्विकाहारादिसेवया सत्त्वैकशरणानां प्राप्तमपि यज्ञादिवैगुण्यं ब्रह्मनामनिर्देशेन परिहरतां श्रवणादिना बोधो दर्शितः ॥ २८ ॥

श्रद्धात्रयविभागज्ञस्त्यक्त्वैवान्ये हि सात्त्विकीम् ।
श्रद्धां धृत्वैव हृदये शनैर्ज्ञानाद्विमुच्यते ॥ १ ॥
श्रद्धया यज्ञदानादियोगं कृत्वा सुभक्तितः ।
साधुतां समनुप्राप्य ज्ञानयोगाद्विमुच्यते ॥ २ ॥

इति श्रीमत्स्वामिहनुमद्दासषट्शास्त्रिविरचितायां सारसंग्राहिकाय'
टीकायां सप्तदशोऽध्यायः ॥ १७ ॥

---

# अष्टादशोऽध्यायः (१८)



पूर्वाध्यायैरितस्ततो विक्षिप्ततयोक्तमर्थमुपनिषत्सु चेतस्ततो विस्तृतमर्थं सुखप्रतिपत्तये समुपसंहृत्य वक्तुमयमध्याय आरभ्यते, अतीताध्यायेषूक्तस्य सर्ववेदार्थस्यास्मिन्नध्यायेऽवगम्यमानत्वात्, अर्जुनस्तु संन्यासत्यागशब्दार्थयोरेव विशेषं बुभुत्सुः पृच्छति—

अर्जुन उवाच

संन्यासस्य महाबाहो ! तत्त्वमिच्छामि वेदितुम् ।
त्यागस्य च हृषीकेश ! पृथक्केशिनिषूदन ! ॥ १ ॥

हे महाबाहो ! हे हृषीकेश ! हे केशिनिषूदन ! महत्या शक्त्या सर्वतापदोषविनाशक ! संन्यासस्य मनसा संन्यस्यास्ते, संन्यासयोगयुक्तात्मा, इत्यादावुक्तसंन्यासशब्दार्थस्य, त्यागस्य त्यक्त्वा कर्मफलासङ्गं, सर्वकर्मफलत्यागं, इत्यादावुक्तत्यागशब्दार्थस्य च पृथक् परस्परभिन्नं तत्त्वं याथात्म्यं वेदितुं ज्ञातुमिच्छामि ॥ १ ॥

एवं पृष्टो ज्ञाताभिप्रायः संन्यासत्यागशब्दौ पूर्वं न विविक्तार्थावित्यतस्तन्निर्णयाय—

श्रीभगवानुवाच

काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ।
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ २ ॥

काम्यानां स्वर्गाद्यर्थानां नित्यभिन्नानामन्तःकरणशुद्धावनुपयुक्तानां कर्मणां न्यासं स्वरूपस्य त्यागं संन्यासशब्दार्थं कवयः पण्डिताः केचिद्विदुर्विजानन्ति, सर्वेषां कर्मणां फलस्यात्मसम्बन्धितया प्राप्तस्य त्यागं सर्वकर्मफलत्यागं त्यागं त्यागशब्दार्थं विचक्षणाः पण्डिताः प्राहुः कथयन्ति, एतावन्मात्रेण भिन्नार्थौ शब्दौ वस्तुतः उभयोः शब्दयोस्त्याग एवार्थ इति ॥ २ ॥

त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।
यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥ ३ ॥

"सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः" इति वक्ष्यमाणरीत्या सर्वं कर्मदोषवत् तस्मात्सर्वं कर्म त्याज्यमित्येके मनीषिणो विद्वांसः प्राहुः, अथवा यथा रागादिदोषस्त्यज्यते तथा दोषवदेव कर्माधिकारिभिरपि कर्म त्याज्यमिति सांख्यादिदृष्टिमाश्रिताः प्राहुः, अपरे त्वाहुर्यज्ञदानतपः कर्म यज्ञादिरूपं कर्म न त्याज्यमिति ॥ ३ ॥

एवं मतभेदेन संन्यासत्यागशब्दार्थयोस्तत्त्वं पृथगुक्त्वा स्वमतमाह—

निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ! ।
त्यागो हि पुरुषव्याघ्र ! त्रिविधः सम्प्रकीर्त्तितः ॥ ४ ॥

तत्र तस्मिन् त्यागे त्यागसंन्यासविकल्पे मे मम वचनान्निश्चयं शृणु सम्यगवधारय, हे भरतसत्तम ! हे पुरुषव्याघ्र ! हि यस्मात्त्यागसंन्यासोभयशब्दार्थस्वरूपस्त्यागस्त्रिविधः सम्प्रकीर्त्तितः सम्य-

कथितोऽस्ति यस्त्यागोऽज्ञैः क्रियते तस्माद्दुर्ज्ञेयोऽस्ति विज्ञकृतसंन्यासे तु नास्ति गुणकृद्भेदस्तेषां नैगुण्यपथिस्थितत्वादिति ॥४॥

प्रतिज्ञातं निश्चयं प्रदर्शयन् तत्र हेतुमाह—

यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ ५ ॥

यज्ञो दानं तप इत्येतत्त्रिविधं कर्म न त्याज्यं त्यक्तव्यमस्ति, किन्तु तत् कार्यं कर्तव्यमेवास्ति, यस्माद्यज्ञो दानं तपश्चैव मनीषिणां फलानभिसन्धीनां कुशलानां पावनानि विशुद्धिकारणान्येव भवन्ति, "काम्येऽपि शुद्धिरस्त्येव भोगसिद्ध्यर्थमेव सा । विड्वराहादिदेहेन ह्यैन्द्रं भुज्यते फलम्" । ( इति वार्तिकम् ) ॥ ५ ॥

प्रतिज्ञातमर्थमुपसंहरति पावनत्वप्रकारं दर्शयन्—

एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ ! निश्चितं मतमुत्तमम् ॥ ६ ॥

एतान्यपि यज्ञदानतपांस्यपि कर्माणि सङ्गमासक्तिं कर्तृत्वाभिनिवेशं फलानि च त्यक्त्वैव कर्तव्यानीति मे मम निश्चितमुत्तमं मतमस्ति हे पार्थ ! मनोविशुद्धये कर्मकर्तव्यतोक्ता ॥ ६ ॥

स्वाध्यवसायमुक्त्वा यज्ञदानतपःकर्म न त्याज्यमिति स्वपक्षं स्थापयित्वा त्यागस्य त्रैविध्यं दर्शयितुमारभते—

नियतस्य तु संन्यासः कर्मणो नोपपद्यते ।
मोहात्तस्य परित्यागस्तामसः परिकीर्त्तितः ॥ ७ ॥

काम्यस्य कर्मणो बन्धकत्वात्संन्यासो युक्तो नियतस्य नित्यस्य तु संन्यासस्त्यागो नोपपद्यते नोपपन्नो भवति, अज्ञस्य पावनत्वेनेष्टत्वात्, नियतमवश्यं कर्तव्यं त्यज्यते चेति विप्रतिसिद्धत्वाच्च,

तस्य नियतस्य मोहात्पावनत्वापरिज्ञानात्परित्यागस्तामसः परिकीर्त्तितो मोहस्तमस्तन्निमित्तकत्वात् ॥ ७ ॥

राजसं त्यागमाह—

दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् ।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ ८ ॥

मोहाभावेऽपि दुःखं कर्मेत्येवं मत्वा कायक्लेशभयाद् यत्कर्म त्यजेत्, यदित्यव्ययं वा यः कर्म त्यजेदित्यर्थः, स कर्माधिकृतोऽविशुद्धान्तःकरणो राजसं त्यागं कृत्वा त्यागस्य सात्त्विकस्य ज्ञानपूर्वकस्य सर्वकर्मत्यागस्य फलं ज्ञाननिष्ठां मोक्षं न लभेत् न लभते ॥८॥

हेयौ त्यागौ दर्शितौ सात्त्विकमाह—

कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ! ।
सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥ ६ ॥

सङ्गं कर्तृत्वाभिनिवेशमासक्तिमानुषङ्गिकं फलं च त्यक्त्वैव कार्यं कर्तव्यमेवेति बुद्ध्या नियतं नित्यमवश्यकर्त्तव्यं यत् कर्म क्रियते स त्यागः सात्त्विको मतः कर्मस्वरूपात्यागेऽपि फलादित्यागेन तृतीयत्वेन कर्मत्यागत्वेन सम्मतः स्वीकृतः सद्भिः ॥ ९ ॥

सात्त्विकत्यागयुक्तस्य निष्ठां-लक्षणमाह—

न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते ।
त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥ १० ॥

यस्त्यागी पूर्वोक्तसङ्गफलत्यागवान् नित्यकर्मानुष्ठायी सत्त्वसमाविष्टो विवेकहेतुना सत्त्वेन शुद्धान्तःकरणेन समाविष्टः संयुक्तोऽत एव मेधावी स्वात्मज्ञानी विवेकादिबुद्ध्या प्राप्तात्मनिश्चयो मेधावित्वादेव छिन्नसंसयः। "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः", "तमेव विदित्वाऽतिमृत्युमेति" इत्यादि श्रुतेः, स तदा अकुशलम-

शोभनं काम्यं निषिद्धं च कर्म न द्वेष्टि तत्त्यागं स्वभावात्कर्तव्यबुद्धया करोति न द्वेषात्, कुशले शोभने वा कर्मणि नानुषज्जते तत्रासक्तिं प्रीतिं नैव करोति, स्वभावात्कर्तव्यबुद्धया वा लोकसंग्रहार्थं प्रीतिं विनैव करोति त्यजति वा, उदासीन एव समाधिनिष्ठस्तिष्ठति ॥ १० ॥

ज्ञानवतः कर्मत्यागः सम्भाव्यते रागद्वेषाभावात्—सात्त्विकत्यागे च कर्मस्वरूपत्यागाभावेऽपि फलासङ्गत्यागमात्रमेवोक्तवान् तत्र कर्मस्वरूपत्यागाभावे हेतुमाह—

न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥ ११ ॥

हि यस्माद्देहभृता देहमात्मत्वेन बिभर्त्तीतिदेहभृत् तेन देहाभिमानवताऽज्ञेनाशेषतो निःशेषेण सर्वाणि कर्माणि त्यक्तुं संन्यसितुं न शक्यते न त्यक्तुं शक्यं विद्यते तस्माद्यस्त्वज्ञोऽधिकारी विहितानि कर्माणि कुर्वन्नेव कर्मफलत्यागी स त्यागीत्यभिधीयते कर्मफलाभिसन्धिमात्रत्यागात्कर्मत्यागीति कथ्यते, न तु कर्मस्वरूपत्यागेन, देहाभिमानशून्येन परमार्थदर्शिना तु शक्यते कर्मस्वरूपमपि त्यक्तुमिति ॥ ११ ॥

त्यागफलमाह—

अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥ १२ ॥

अनिष्टं नरकतिर्यगादि, इष्टं स्वर्गादि मिश्रं मानुष्यं च त्रिविधं त्रिप्रकारं कर्मणो धर्माधर्मलक्षणस्य फलं बाह्यव्यापारसाध्यं फल्गुतया ( असारतया ) लयं गच्छतीति फलं तुच्छमत्यागिनामज्ञानामाऽऽशासङ्गादियुक्तानामेव प्रेत्य शरीरपातादूर्ध्वं भवति, न तु संन्यासिनां विवेकज्ञानेन दग्धसर्वकर्मणामाशासङ्गादित्यागिनां त्यागेन

कृतानामपि कर्मणां निर्बीजभावादिति क्वचिदपि देशे काले वोक्तं फलं तेषां नैव भवति, आत्मज्ञानेन हि कर्मस्वरूपं दह्यत एव फलाशङ्कापि न भवतीति भावः ॥ १२ ॥

त्यागप्रकारमुक्त्वेदानीं स्वरूपतः कर्मत्यागात्मकसंन्यासस्य सांख्ययोगस्य तत्त्वं वक्तुमारंभते—

पञ्चैतानि महाबाहो ! कारणानि निबोध मे ।
सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥१३॥

हे महाबाहो ! एतानि वक्ष्यमाणानि पञ्च कारणानि निर्वर्त्तकानि मे मम वचनान्निबोध जानीहि, तानि च सांख्ये कृतान्ते सर्वकर्मणां सिद्धये प्रोक्तानि सन्ति, सम्यक् ख्यायन्ते ज्ञातव्या पदार्था यस्मिन्वेदान्ते तत्सांख्यं कृतस्य कर्मणोऽन्तः परिसमाप्तिर्यत्र तस्मिन् कृतान्ते "सर्वं कर्माखिलं पार्थ ! ज्ञाने परिसमाप्यते" इत्यात्मज्ञानं कृतान्तं तदर्थस्य सांख्यस्यापि वेदान्तस्य कृतान्तत्वं तस्मिन्नात्मज्ञाने तदर्थे शास्त्रे सर्वकर्मणां सिद्धये कारणानि कथितानि सन्तीत्यर्थः ॥ १३ ॥

कानि तानीत्युच्यते—

अधिष्ठानं तथा कर्त्ता करणं च पृथग्विधम् ।
विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥ १४ ॥

इच्छाद्वेषसुखदुःखादीनामभिव्यक्तेराश्रयोऽधिष्ठानं शरीरं, तथाऽधिष्ठानवदेव बुद्धिविशिष्टो य उपाधिप्रधानश्चिदचिद्ग्रन्थिरूपोऽहङ्कारः स कर्त्ता, पृथग्विधं नानाप्रकारं मनोबुद्धिसहितमिन्द्रियं ज्ञानकर्मसाधनं करणं विविधाश्च पृथक्चेष्टा वायवीया प्राणापनाद्याः, दैवं चैव दैवमेवात्र चतुर्षु पञ्चमं चक्षुराद्यनुग्राहकमादित्यादिकं दैवाऽ(दिष्टा) नुसारेण जन्मायुर्भोगप्रदः परमात्मा च ॥१४॥

पञ्चानां स्वरूपमुक्त्वा कर्महेतुत्वमाह—

शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः ।
न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥ १५ ॥

न्याय्यं धर्म्यं शास्त्रीयं विपरीतमधर्म्यमशास्त्रीयं यत्कर्म, यच्चापि निमिषितचेष्टादिजीवनहेतुस्तदपि पूर्वकृतधर्माधर्मयोरेव कार्यमिति न्याय्यविपरीतग्रहणेन तद्ग्रहणं बोध्यं, तद्यन्न्याय्यादि कर्म शरीरवाङ्मनोभिर्नरः प्रारभते निर्वर्त्तयति करोति तस्य सर्वस्यैव कर्मणः पञ्चैतेऽधिष्ठानादयो हेतवः कारणानि भवन्ति, पञ्चभिरारब्धस्यापि कर्मणः शरीरवाङ्मन आरभ्यत्वेन त्रैराश्यमपि भवति त्रिष्वेव-पञ्चानामपि विद्यमानत्वात् ॥ १५ ॥

एवमधिष्ठानादीनां कर्महेतुत्वमुक्त्वाऽज्ञदृष्टिमनुवदति—

तत्रैवं सति कर्त्तारमात्मानं केवलं तु यः ।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥ १६ ॥

तत्रैवं सति, एवं यथोक्तप्रकारैस्तत्र तेषु पूर्वोक्तेष्वधिष्ठानादिषु कर्मणि विद्यमाने सति, यथोक्तैः पञ्चभिर्हेतुभिः कर्मणि निर्वर्त्त्ये सति केवलं शुद्धमसंहतमकर्त्तारमात्मानमात्मनोऽनन्यत्वेन कल्पितैरधिष्ठानादिभिः क्रियमाणस्य कर्मणोऽहमेव कर्त्तेति कर्त्तारं योऽकृतबुद्धित्वादसम्पादितविवेकज्ञानत्वादसंस्कृतबुद्धित्वात्पश्यति ततः स दुर्मति र्न पश्यति स्वात्मानं तत्त्वतः योऽपि देहादिव्यतिरिक्तात्मवादी अन्यमात्मानमेव केवलमसङ्गं कर्त्तारं पश्यत्यसावप्यकृतबुद्धिरेव तस्मात्स कर्मण आत्मनो वा तत्त्वं न पश्यति ततो दुर्मतिः स पश्यन्नपि न पश्यति ॥ १६ ॥

कः पुनः सुमतिर्यः सम्यक् पश्यतीत्यपेक्षायामाह—

यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वापि स इमाँल्लोकान्न हन्ति न निबध्यते ॥ १७ ॥

यस्य संस्कृतबुद्धेरहङ्कृतोऽहङ्कर्त्तेत्येवंलक्षणो भावो भावना निश्चयो न भवति किन्त्वधिष्ठानादय एव कर्त्तारोऽहं तु "ह्यप्राणो ह्यमनाः शुभ्रोऽक्षरात्परतः परः केवलोऽविक्रयोऽस्मि, "साक्षी चेता केवलो निर्गुणोऽस्मि" इत्येवमेवात्मानं पश्यति, यस्य च बुद्धिरन्तः-करणं न लिप्यते कर्मफलानुशायिनी न भवति कर्मणोऽस्य फलं भोक्ष्य इति न सङ्कल्पयति स सुमतिः स पश्यति, स इमांल्लोकान् सर्वान् प्राणिनो हत्वापि लोकदृष्ट्या, निजबुद्ध्या न हन्ति न निबध्यते तत्फलेन न सम्बध्यते आत्मनोऽसङ्गत्वात्परमार्थदृष्ट्या कर्तृत्वं भोक्तृत्वं वा नास्त्येवात्मनि कल्पितसङ्घात एव सर्वं कल्पितमस्तीति ज्ञानस्तुतिः ॥ १७ ॥

आत्मनः कर्तृत्वभोक्तृत्वाभाव उक्तस्तमुपपादयितुं कर्मणां प्रवर्त्तकमाह—

**ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ।**
**करणं कर्म कर्त्तेति त्रिविधः कर्मसंग्रहः ॥ १८ ॥**

ज्ञायतेऽनेनेति सर्वविषयमविशेषेण ज्ञानमात्रं, ज्ञेयं ज्ञातव्यं सामान्यं, परिज्ञाता ज्ञानाश्रयो भोक्ता, त्रिविधा कर्मचोदना कर्मणः प्रवर्त्तकं त्रिविधमित्यर्थः, चोद्यतेऽनेनेति चोदना कर्मप्रवृत्तिहेतुः, यद्वा चोदना विधिः "चोदनेतिक्रियायाः प्रवर्त्तकं वचनमाहुः, इति (शाबरे भाष्ये) चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः" (इति भाट्टे) ततश्च ज्ञानादित्रयमवलम्ब्य कर्मविधिः प्रवर्त्तत इत्यर्थः, क्रियतेऽनेनेति करणं श्रोत्रादि बुद्ध्यादि च, कर्मेप्सिततमं कर्तुः क्रियया व्याप्यमानं, कर्त्ता करणानां व्यापारयिता स्वतन्त्र इति त्रिविधः कर्मसंग्रहः, संगृह्यतेऽस्मिन्निति कर्मसंग्रहस्त्रिप्रकारः कर्मणस्त्रिषु संवेतत्वात्, ज्ञानादीनां त्रयाणां हि सन्निपाते सर्वकर्मारम्भो भवतीति त्रिविधा कर्मचोदनोच्यते, ततश्च पञ्चभिरधिष्ठानादिभिरारब्धं

वाङ्मनःकायाश्रयभेदेन त्रिधा राशीभूतं त्रिषु करणादिषु संगृह्यते तस्मात्करणादिः कर्मणां संग्रहः कथ्यते संप्रदानादिकारकत्रयं परम्परया क्रियाया निर्वर्त्तकमपि न साक्षात्क्रियाश्रय इति ॥ १८ ॥

अथेदानीं क्रियाकारकफलानां त्रिगुणात्मकत्वात्तत्त्रैविध्यं दर्शयति सात्त्विकस्योत्तमत्वबोधनाय—

ज्ञानं कर्म च कर्त्ता च त्रिधैव गुणभेदतः ।
प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि ॥ १९ ॥

ज्ञानमुक्तं, कर्म च क्रिया च न तु क्रियाव्याप्यं, कर्त्ता क्रियाया निर्वर्त्तकः, सत्त्वादिगुणभेदतस्त्रिधैव गुणसंख्याने प्रोच्यते, एवकारो विधान्तरनिवारणार्थस्तेन गुणव्यतिरेकेणात्मनः कर्तृत्वाभावः सिद्ध्यति गुणाः सम्यक्ख्यायन्तेऽस्मिन्निति गुणसंख्यानं कापिलं शास्त्रं, तानि ज्ञानादीनि, अपिशब्दात्तद्भेदजातानि च शृणु यथावत्तत्त्वतो यथाशास्त्रम् ॥ १९ ॥

ज्ञानस्य त्रैविध्यं तावदाह—

सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥२०॥

सर्वभूतेषु सर्वेषु—अव्यक्तादिस्थावरान्तेषु भूतेषु भवनशीलेषु विभक्तेषु देहादिभेदेन विभागवत्सु परस्परव्यावृत्तेष्वेकमद्वितीयमव्ययं स्वरूपतो धर्मैर्वा विकारशून्यं कूटस्थमविभक्तं विभागशून्यमव्यावृत्तं सर्वत्रानुस्यूतं भावं परमार्थवस्तु येन ज्ञानेनेक्षते पश्यति तज्ज्ञानमद्वैतात्मदर्शनं सात्त्विकं विद्धि जानीहि ॥ २० ॥

पृथक्त्वेन तु यज्ज्ञानं नानाभावान्पृथग्विधान् ।
वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥ २१ ॥

पृथक्त्वेन प्रतिशरीरमन्यत्वेन नानाभावान् भिन्नात्मात्मानः पृथग्विधान् भिन्नप्रकारान् सुखदुःखादिमत्त्वेन भिन्नलक्षणान् सर्वभूतेषु यज्ज्ञानं वेत्ति येन ज्ञानेन वेत्ति तज्ज्ञानं राजसं विद्धि ॥२१॥

यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम् ।
अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥ २२ ॥

यत्तु ज्ञानमेकस्मिन् कार्ये देहे प्रतिमादौ वा कृत्स्नवत् परिपूर्णवत् समस्तवत् सक्तमेतावानेवात्मा परमेश्वरो वा नातः परमस्तीति समासक्तमभिनिवेशयुक्तमहैतुकं निरुपपत्तिकं निर्युक्तिकमतत्त्वार्थवत्, यथाभूतोऽर्थस्तत्त्वार्थः सोऽस्य ज्ञेयभूतोऽर्थोऽस्तीति तत्त्वार्थवत् तद्भिन्नमतत्त्वार्थवदत एवाल्पं तुच्छमल्पविषयत्वादल्पफलत्वाच्च तत्तामसानामविवेकिनां तामसं ज्ञानमुदाहृतम् ॥२२॥

अथ कर्मणस्त्रैविध्यमुच्यते—

नियतं सङ्गरहितमरागद्वेषतः कृतम् ।
अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥ २३ ॥

नियतं नित्यमवश्यकर्तव्यतया विहितं सङ्गरहितमासक्तिवर्जितमभिमानशून्यमरागद्वेषतः कृतं रागद्वेषाभ्यां विना कृतमफलप्रेप्सुना फलं प्रेप्सतीति फलप्रेप्सुस्तद्विपरीतेन फलेच्छारहितेन कर्त्रा कृतं यत् कर्म तत्सात्त्विकमुच्यते, पुत्रादिप्रीत्या शत्र्वादिद्वेषेण स्वर्गादीच्छया विना कृतं नियतं सङ्गरहितं कर्म सात्त्विकमिति ॥२३॥

यत्तु कामेप्सुना कर्म साहङ्कारेण वा पुनः ।
क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥ २४ ॥

कामेप्सुना फलेप्सुना साहङ्कारेण साभिमानेनासक्तियुक्तेन वा बहुलाऽऽयासं महताऽऽयासेन क्लेशेन निर्वर्त्यं यत्तु कर्म क्रियते तद्राजसमुदाहृतं पुनः शब्दः पादपूरणाऽर्थो वा समुच्चयार्थः ॥२४॥

अनुबन्धं क्षयं हिंसामनवेक्ष्य च पौरुषम् ।
मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥ २५ ॥

अनुबध्यत इत्यनुबन्धः पश्चाद्भावि वस्तु दोषोत्पादः फलं, क्षयः शक्तिद्रव्यादिनाशः, हिंसा परपीडा, पौरुषं पुरुषकारमारब्धसमाप्तिसामर्थ्यमित्येतान्यनवेक्ष्यापर्यालोच्य मोहादविवेकाद्यत्कर्म प्रारभ्यते तत्तामसमुदाहृतम् ॥ २५ ॥

अथ कर्तुस्त्रैविध्यमाह—

मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्त्ता सात्त्विक उच्यते ॥२६॥

मुक्तः परित्यक्तः सङ्गः फलाभिनिवेशो येन स मुक्तसङ्गोऽनहंवादी गर्वोक्तिरहितो धृत्युत्साहाभ्यां धैर्योद्यमाभ्यां समन्वितो युक्तो विघ्ने सत्यप्युद्यमपरायणः कर्मफलस्य सिद्ध्यसिद्ध्योर्निर्विकारो हर्षशोकरहितः केवलं कर्तव्यबुद्ध्या कर्मकर्त्ता सात्त्विक उच्यते ॥२६॥

रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।
हर्षशोकान्वितः कर्त्ता राजसः परिकीर्त्तितः ॥ २७ ॥

रागी रागवान्, कर्मफलप्रेप्सुः कर्मफलार्थी, लुब्धः परधनतृष्णायुक्तः, हिंसात्मकः परपीडास्वभावः, अशुचिर्बाह्याभ्यन्तरशौचहीनः, लाभालाभयोर्हर्षविषादयुक्तः कर्त्ता राजसः कथितः ॥२७॥

अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः ।
विषादी दीर्घसूत्री च कर्त्ता तामस उच्यते ॥ २८ ॥

अयुक्तो विषयापहृतचित्ततयाऽसमाहितः, प्राकृतोऽत्यन्तासंस्कृतबुद्धिर्बालसमः, स्तब्धोऽनम्रो मन्दस्वभावः, शठः शक्तिगूहनकारी मायावी, नैष्कृतिकः परवृत्तिच्छेदनपरः परावमानी, अलसः

कर्तव्येऽप्रवृत्तिशीलो, विषादी सदावसन्नस्वभावः शोकशीलः, दीर्घसूत्री कार्याणां दीर्घप्रसारणस्वभावो दीर्घं सूत्रयितुं शीलमस्य स च कर्त्ता तामस उच्यते ॥ २८ ॥

एवं बुद्धिवृत्तेर्ज्ञानस्य कर्मकर्त्तुर्बुद्ध्युपहितस्य च त्रैविध्यमुक्त्वा वृत्तिमत्या बुद्धेस्तद्वृत्तेर्धृतेश्च त्रैविध्यमाह—

बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ।
प्रोच्यमानमशेषेण पृथक्त्वेन धनञ्जय ! ॥ २९ ॥

बुद्धेः धृतेश्च सत्त्वादिगुणतस्त्रिविधं भेदमशेषेण निरवशेषतः पृथक्त्वेन विवेकतः प्रोच्यमानं हे धनञ्जय ! त्वं शृणु ॥ २९ ॥

प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ।
बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ ! सात्त्विकी ॥३०॥

प्रवृत्तिं कर्ममार्गं संसारहेतुं निवृत्तिं त्यागमार्गं मोक्षहेतुं, अथवा प्रवृत्तिं शास्त्रविषयां क्रियां निवृत्तिं निषिद्धविषयां निवर्त्तनां कार्याकार्ये कर्तव्याकर्तव्ये देशकालाद्यपेक्षया दृष्टादृष्टार्थानां कर्मणां करणाकरणे भयाभये बिभेत्यस्मादिति भयं प्रवृत्तिमार्गे दुःखं, तद्विपरीतमभयं निवृत्तौ भयाभावं भयाभयकारणे भयाभयस्वरूपं च बन्धं सहेतुकं मोक्षं च सहेतुकं या वेत्ति यया वेत्ति सा बुद्धिः सात्त्विकी भवति ॥ ३० ॥

यया धर्ममधर्मं च कार्यं चाकार्यमेव च ।
अयथावत्प्रजानाति बुद्धिः सा पार्थ ! राजसी ॥ ३१ ॥
अधर्मं धर्ममिति या मन्यते तमसावृता ।
सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ ! तामसी ॥ ३२ ॥

यया बुद्ध्या धर्मं शास्त्रविहितमधर्मं तत्प्रतिषिद्धं च कर्तव्यम-

कर्तव्यमेव चायथावदेवाविवेकेनानिर्णयेन जानाति हे पार्थ ! सा बुद्धी राजसी भवति ॥ ३१ ॥ तमसावृताऽविवेकेन वेष्टिता या बुद्धिरधर्मं निषिद्धं पापमेव धर्ममिति मन्यते सर्वानेव ज्ञेयानर्थांश्च विपरीतानेव मन्यते सा बुद्धिस्तामसी भवति ॥ ३२ ॥

धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ।
योगेनाव्यभिचारिण्या धृतिः सा पार्थ ! सात्त्विकी ॥ ३३ ॥

योगेन समाधिना समाधानेनाव्यभिचारिण्याऽविनाभूतया नित्यं समाध्यनुगतया यया धृत्या धारणप्रयत्नेन मनसः प्राणेन्द्रियाणां च क्रिया चेष्टा धारयत उच्छास्त्रप्रवृत्तेर्निरुणद्धि धृत्या हि धार्यमाणा प्रवृत्तिरुच्छास्त्रविषया न भवति, यस्यां सत्यां समाधिर्भवति, हे पार्थ ! योगेनाव्यभिचारिणी सा धृतिः सात्त्विकी भवति ॥ ३३ ॥

यया तु धर्मकामार्थान्धृत्या धारयतेऽर्जुन ! ।
प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ ! राजसी ॥ ३४ ॥

हे अर्जुन ! यया तु धृत्या धर्मकामार्थान् धारयते, मनसि नित्यं कर्तव्यरूपानवधारयति, प्रसङ्गेन यस्य यस्य धर्मादेर्धारणप्रसङ्गस्तेन तेन प्रसङ्गेन यः पुरुषः फलाकाङ्क्षी च भवति, हे पार्थ ! तस्य या धृतिः सा राजसी भवति ॥ ३४ ॥

यया स्वप्नं भयं शोकं विषादं मदमेव च ।
न विमुञ्चति दुर्मेधा धृतिः सा पार्थ ! तामसी ॥ ३५ ॥

दुर्मेधा दुर्बुद्धिः पुरुषो यया धृत्या स्वप्नं निद्रां भयं त्रासं शोकमिष्टवियोगनिमित्तं सन्तापं विषादं विषण्णतामिन्द्रियखिन्नतां मदमशास्त्रीयविषयसेवोन्मुखत्वमेव च न विमुञ्चति किन्तु कर्तव्यतया मन्यमानो मनसि धारयत्येव विषयसेवां बहुमन्यमानो तां कुर्वन् मत्त इव च वर्त्तते यया धृत्या हे पार्थ ! सा धृतिस्तामसी ॥ ३५ ॥

गुणभेदेन क्रियाणां कारकाणां च त्रिधा भेद उक्तोऽथेदानीं फलस्य च सुखस्य त्रिधा भेद उच्यते—

सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ! ।
अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ॥ ३६ ॥

हे भरतर्षभ ! इदानीं तु त्रिविधं सुखं मे मम वचनाच्छृणु श्रुत्वावधारय, त्रिविधस्यापि सुखस्य सामान्यलक्षणमाह—अभ्यासादावृत्तेर्यत्र सात्त्विकादिसुखे रमते रतिं प्रतिपद्यते रममाणश्च दुःखस्यान्तमवसानं निगच्छति दुःखोपशमं निश्चयेन प्राप्नोति, यद्वा यत्र सात्त्विके सुखेऽभ्यासाद्रमते सात्त्विकसमाधिसुखपरिचयात्तृप्तो भवति दुःखस्य सर्वस्यावसानं च निश्चयेन प्राप्नोति ॥ ३६ ॥

यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।
तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥ ३७ ॥

यत्तत् किमपि सुखमग्रे पूर्वं प्रथमसन्निपाते ज्ञानवैराग्यध्यानाद्यारम्भेऽत्यन्तायासपूर्वकत्वाद्विषमिव दुःखात्मकं भवति, परिणामे ज्ञानादिपरिपाकेऽमृतोपममत्यन्ताह्लादकरं भवति तत्सुखं सात्त्विकं प्रोक्तं विद्वद्भिः कथितं, आत्मबुद्धिप्रसादजमात्मनो बुद्धिरात्मबुद्धिरात्मबुद्धेः प्रसादो नैर्मल्यं तस्माज्जातं, आत्मविषया वा बुद्धिरात्मबुद्धिस्तस्या नैर्मल्याज्जातमेव तत्सात्त्विकं सुखं भवति ॥ ३७ ॥

विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ।
परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥ ३८ ॥

विषयाणामिन्द्रियाणां च संयोगाद्यत् तत् प्रसिद्धं सुखमग्रे प्रथमक्षणेऽमृतोपमममृतसमं भाति मनःसंयमादिक्लेशाभावात्, परिणामे तदुपभोगान्ते विषमिव बलवीर्यरूपप्रज्ञादिहानिहेतुत्वादधर्मजनितनरकादिहेतुत्वाच्च विषतुल्यं तत्सुखं राजसं स्मृतं कथितम् ॥ ३८ ॥

यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।
निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥ ३९ ॥

यत्सुखमग्रे प्रथमारम्भेऽनुबन्धेऽवसानोत्तरकाले परिणामे चात्मनो बुद्धेर्मोहनं मोहकरं निद्रालस्यप्रमादेभ्यः समुत्तिष्ठतीति निद्रालस्यप्रमादोत्थं भवति तत्सुखं तामसमुदाहृतं कथितम् ॥ ३९ ॥

इदानीमनुक्तमपि सङ्गृह्णन् प्रकरणार्थमुपसंहरति—

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥ ४० ॥

पृथिव्यां तन्नास्ति सत्त्वं प्राण्यप्राणि वा वस्तु दिवि देवेषु वा तद्वस्तु नास्ति यदेभिस्त्रिभिः सत्त्वादिभिः प्रकृतिजैः प्रकृतितो जातैर्मायिकैर्गुणैर्मुक्तं परित्यक्तं स्याद्भवेत्, तथा च क्रियाकारकफललक्षणः सर्वोऽपि संसारः सत्त्वरजस्तमोगुणात्मकोऽविद्याकल्पितः समूलोऽनर्थ आत्मज्ञानेनाविद्यानिवृत्त्या निवर्त्तितव्य इति भावः॥४०॥

त्रिगुणात्मक जगद्वृत्तोच्छेदायापेक्षितज्ञानार्थमन्तःकरणशुद्धेरावश्यकत्वात्तदर्थं चापेक्षितस्य कर्मणो वर्णाश्रमभेदेन नियतत्वान्नियतस्य सङ्गादिरहितस्य कर्मणः सात्त्विकत्वात्तद्दर्शनार्थं गीतार्थमुपसंहरन्नाह—

ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप ! ।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ ४१ ॥

हे परन्तप ! ब्राह्मणक्षत्रियविशां शूद्राणां च कर्माणि स्वभावप्रभवैर्ब्राह्मण्यादिस्वभावानां प्रभवैर्हेतुभिर्गुणैः सत्त्वादिभिरथवा मायाख्या प्रकृतिः स्वभावस्तत उपादानात्प्रभवो येषां गुणानां तैर्गुणैर्यद्वा प्राग्भवीयः संस्कारो वर्त्तमाने जन्मनि स्वफलायाभिव्यक्तः स्वभावः स प्रभवो निमित्तो येषां तैर्गुणैर्ब्राह्मणादीनां कर्माणि

प्रविभक्तानि भवन्ति शमादीनि, शास्त्रस्यापि पुरुषस्वभावापेक्ष-त्वाच्छास्त्रेण प्रविक्तान्यपि गुणैः प्रविभक्तानीत्युच्यन्ते, द्विजातित्वेन समत्वाद् ब्राह्मणादीनां समासस्तदभावान्नान्येषामिति ॥ ४१ ॥

कानि पुनस्तानि कर्माणीत्युच्यन्ते—

शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥ ४२ ॥

शमादयो व्याख्याता एव क्षान्तिः क्षमाऽऽर्जवमृजुतैव ज्ञानं शास्त्रजं विज्ञानमनुभवः आस्तिक्यं परमार्थेष्वागमेषु श्रद्दधानता ब्रह्मकर्म ब्राह्मणजातेः कर्म स्वभावजं सत्त्वगुणस्वभावकृतम् ॥४२॥

शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥ ४३ ॥

शौर्यं शूरता विक्रमः, तेजः प्रागल्भ्यं, धृति धैर्यं, दाक्ष्यं कौशलं, युद्धे चापलायनं शत्रुभ्योऽपराङ्मुखत्वं, दानमौदार्य-मीश्वरभाव ईशितव्यान् प्रति प्रभुशक्तिप्रकटीकरणं नियमनशक्तिः, क्षात्रं कर्म क्षत्रियजातेः कर्म स्वभावजं सत्त्वोपसर्जनरजोगुणस्व-भावजमिति ॥ ४३ ॥

कृषिगौरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम् ।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥ ४४ ॥

कृषिः कर्षणं च गां रक्षतीति गोरक्षस्तस्य भावो गौरक्ष्यं पाशुपाल्यं च वाणिज्यं वणिक्कर्म च कृषिगौरक्ष्यवाणिज्यं वैश्य-कर्म वैश्यजातेः कर्म स्वभावजं तमउपसर्जनरजोगुणस्वभावजं परिचर्यात्मकं शुश्रूषात्मकं शूद्रस्यापि स्वभावजं, रजउपसर्जन-तमोगुणस्वभाजम् ॥ ४४ ॥

एतेषां जातिविहितानां कर्मणां सम्यगनुष्ठितानां मोक्षापेक्षामन्तरेण विहितत्वादेवानुष्ठानात्स्वर्गप्राप्तिः फलं "सर्व एते पुण्यलोका भवन्ति, वर्णा आश्रमाः स्वकर्मनिष्ठाः प्रत्येकं कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलधर्मायुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते" इत्यादिश्रुतिस्मृतिपुराणेभ्यः, एतेषामेव मोक्षापेक्षयाऽनुष्ठितानां यत्फलं तद्वक्तुमारभते—

स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।
स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥ ४५ ॥

स्वे स्वे यथोक्ते कर्मण्यभिरतस्तत्परो नरोऽधिकृतः पुरुषः संसिद्धिं स्वकर्मानुष्ठानादशुद्धिक्षये सति कायेन्द्रियाणां ज्ञाननिष्ठान योग्यतां लभते, कथं लभत इत्यपेक्षायामाह स्वकर्मनिरतः सिद्धिं यथा येन प्रकारेण विन्दति लभते तत्प्रकारं शृणु ॥ ४५ ॥

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ ४६ ॥

यतो यस्माज्जगज्जनकादन्तर्यामिणो भूतानां प्राणिनां प्रवृत्तिरुत्पत्तिश्चेष्टा वा भवति येन चेश्वरेणेदं सर्वं जगत् ततं व्याप्तमस्ति कारणात्मनाऽधिष्ठानादिरूपेण, तं परमात्मानं स्वकर्मणाऽभ्यर्च्य पूजयित्वाऽऽराध्य मानवोऽधिकृतो मनुष्यः सिद्धिं ज्ञानयोग्यतां विन्दति॥४६॥

यस्मादेवं तस्मात्—

श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वाभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ ४७ ॥

स्वो धर्मो स्वधर्मो विगुणोऽसम्यगनुष्ठितोऽपि स्वनुष्ठितात् सम्यगनुष्ठितात्परधर्मात् श्रेयान् प्रशस्यतरः, तस्मात्स्वभावेन नियतं स्वकीयं कर्म यत्स्वभावजमित्युक्तं तत्कुर्वन् किल्विषं पापं नाप्नोति, यथा विष

जातस्य कृमेर्विषं न दोषकरं तथा स्वभावनियतं कर्म न दोषावहमिति ४७

यस्मात्स्वभावनियतं कर्म न दोषावहं परधर्मश्च भयावहः सामान्यदोषेण च सर्वकर्माणि दुष्टानि कश्चिदप्यज्ञश्चाकर्मकृत् क्षणमपि न तिष्ठति तस्मात्—

सहजं कर्म कौन्तेय ! सदोषमपि न त्यजेत् ।
सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ॥ ४८ ॥

सहजं जन्मनैव सहोत्पन्नं स्वभावजं सदोषमपि युद्धादिकं कर्म न त्यजेत् हे कौन्तेय ! हि यस्मात् सर्वारम्भा सर्वाणि कर्माणि स्वधर्माः परधर्मा वा त्रिगुणमयत्वाद् धूमेन सहजेनाग्निरिव सहजेन दोषेणावृता व्याप्ताः सदोषा भवन्ति, तस्मात् परधर्मानुष्ठानेऽपि दोषः स्यादेवेति स्वधर्मानुष्ठानमेव वरमिति ॥ ४८ ॥

ज्ञाननिष्ठायोग्यतालक्षणायाः कर्मजायाः सिद्धेः फलभूतां ज्ञाननिष्ठालक्षणां नैष्कर्म्यसिद्धिमाह—

असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ।
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥ ४९ ॥

सर्वत्र पुत्रदाराद्यासक्तिनिमित्तेष्वसक्तबुद्धिरसक्ता सङ्गरहिता बुद्धिर्यस्य यतो जितात्मा जित आत्माऽन्तःकरणं यस्यात एव विगतस्पृहो विगता स्पृहा तृष्णा यस्मात्स तृष्णारहितः संन्यासेन सम्यग्दर्शनेन तत्पूर्वकेण सर्वकर्मसंन्यासेन वा परमां प्रकृष्टां सद्योमुक्तिलक्षणां नैष्कर्म्यसिद्धिं निर्गतानि कर्माणि यस्मान्निष्क्रियाऽऽत्मबोधात् स निष्कर्मा तस्य भावो नैष्कर्म्यं नैष्कर्म्यं च तत्सिद्धिश्च नैष्कर्म्यसिद्धिः, नैष्कर्म्यस्य वा निष्क्रियात्मस्वरूपावस्थानलक्षणस्य सिद्धिस्तामधिगच्छति "तदुक्तं सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी" इति ॥ ४९ ॥

पूर्वोक्तेन स्वकर्मानुष्ठानेनेश्वराभ्यर्चनरूपेण जनितां ज्ञाननिष्ठायोग्यतालक्षणां सिद्धिं प्राप्तस्योत्पन्नात्मविवेकज्ञानस्य केवलात्मज्ञाननिष्ठा नैष्कर्म्यलक्षणा सिद्धिर्येन क्रमेण भवति तं श्रावयितुमाह—

सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे ।
समासेनैव कौन्तेय ! निष्ठा ज्ञानस्य या परा ॥ ५० ॥

हे कौन्तेय ? सिद्धिं कर्मजां शुद्धिं ज्ञानयोग्यतां प्राप्तो यथा येन प्रकारेण ज्ञाननिष्ठारूपेण ब्रह्म परमात्मानमाप्नोति शुद्धात्मानं साक्षात्करोति तथा तं प्रकारं ज्ञाननिष्ठाप्राप्तिक्रमं मे मम वचनान्निबोध त्वमवधारय, समासेन संक्षेपेणेति, प्रतिज्ञातां ब्रह्मप्राप्तिमिदन्तया दर्शयितुमाह—निष्ठेति या ब्रह्मप्राप्तिरात्मज्ञानस्य परा निष्ठा परिसमाप्तिस्तां ब्रह्मप्राप्तिरूपां संक्षेपेण निबोध ॥ ५० ॥

सा ज्ञानस्य परा निष्ठा कथं कार्येति चेदाह—

बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च ।
शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥५१॥
विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥५२॥
अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥५३॥

विशुद्धया मायारहितया बुद्ध्या व्यवसायात्मिकया ब्रह्मज्ञानान्मोक्षनिश्चयात्मिकया युक्तः सम्पन्नो धृत्या धैर्येणात्मानं कार्यकरणसङ्घातं नियम्य वशीकृत्य निरुध्य चादहिंसाशौचादिकं गृह्यते, शब्दादीन् विषयान् त्यक्त्वा बन्धहेतून् विषयान् परित्यज्य, शरीरस्थितिमात्रार्थेषु च तेषु रागद्वेषौ व्युदस्य परित्यज्य चकारान्मात्स-

र्यादिकमपि त्यक्त्वा ब्रह्मभूयाय कल्पत इति सम्बन्धः ॥ ५१ ॥ ततो विविक्तसेवी विविक्तान् जनसङ्घशून्यान् देशान् सेवितुं शीलमस्य स लघ्वाशी लघुहितमिताशनशीलो विक्षेपनिद्रालस्यादिहेतुरहितो यतानि वाक्कायमनांसि यस्य स यतवाक्कायमानस उपरतसर्वकरणः सन् नित्यं ध्यानयोगपरो ध्यानमात्मचिन्तनं योग आत्मनि चित्तैकाग्र्यं तौ ध्यानयोगौ परत्वेन कर्तव्यौ यस्य यद्वा षष्ठाध्यायोक्तध्यानयोगे तत्पर आत्मचिन्तनेन कृतात्मचित्तैकाग्र्यः, नित्यं वैराग्यं विषयवैतृष्ण्यं समुपाश्रितोऽन्यथा ध्यानासिद्धेः ॥५२॥ देहादिष्वहङ्कारमात्मत्वाभिमानादि, बलं कामरागादिप्रयुक्तं सामर्थ्यं नेतरच्छरीरादिसामर्थ्यं स्वाभाविकत्वेन तत्त्यागस्याशक्यत्वात्, दर्पो हर्षानन्तरभावी धर्मातिक्रमहेतुः "हृष्टो दृप्यति दृप्तो धर्ममतिक्रामतीति स्मृतेः" कामक्रोधौ प्रसिद्धौ, परिग्रहं बाह्योपकरणं विमुच्य त्यक्त्वा निर्ममोऽत एव शान्तः सर्वथैव विक्षेपहेतुविक्षेपरहितः सन् ब्रह्मभूयाय ब्रह्मसाक्षात्काराय कल्पते ॥ ५३ ॥

तत्र क्रममाह—

ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ ५४ ॥
भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥५५॥

अनेन बुद्ध्या विशुद्धयेत्युक्तेन क्रमेण ब्रह्मभूतो ब्रह्मप्राप्तो ब्रह्मभवनसमर्थत्वाद् ब्रह्मण्यवस्थितः प्रसन्नात्मा कर्तृत्वादिभावविमुक्तत्वात् प्रसन्नो व्यक्तानन्दः प्रत्यगात्मा यस्य स प्रसन्नात्माऽत एव न शोचति नष्टं न काङ्क्षत्यप्राप्तं, सर्वेषु भूतेषु समश्च भवत्यात्मौपम्येन सुखं दुःखं वा सममेव पश्यति न त्वात्मदर्शनमिहार्थस्तस्य वक्ष्य-

माणत्वात् , एवं भूतो ज्ञाननिष्ठो मद्भक्तिं मयि भक्तिं ज्ञानलक्षणं परामुत्तमां लभते प्राप्नोति ॥ ५४ ॥ ततश्च ज्ञानलक्षणया परया भक्त्या तत्त्वतो मामभिजानाति यावानहमुपाधिकृतविस्तारोऽस्मि विभुश्च, यश्च पूर्णानन्दादिस्तत्त्वतोऽस्मि, ततो मामेवं तत्त्वतो ज्ञात्वा तदनन्तरं मामेव विशते न फलान्तरं प्राप्नोति, फलान्तरस्य ज्ञानेन बाधितत्वात् , ज्ञानप्राप्त्योश्चौपचारिको भेदः ॥ ५५ ॥

स्वकर्मणा भगवतोऽभ्यर्चनभक्तियोगस्य ज्ञाननिष्ठायोग्यतारूपा सिद्धिप्राप्तिः फलं, यन्निमित्ता ज्ञाननिष्ठा मोक्षफलावसाना, स भगवद्भक्तियोगोऽधुना स्तूयते शास्त्रार्थोपसंहारप्रकरणे शास्त्रार्थनिश्चयदार्ढ्याय—

सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यापाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥ ५६ ॥

मद्व्यपाश्रयोऽहंसर्वात्मेश्वरः प्रत्यगात्मा व्यपाश्रय आश्रयणीयः शरणं यस्य स सदा सर्वकर्माण्यपि कुर्वाणोऽनुतिष्ठन्नपि कर्मत्यागं विनैव मत्प्रसादादीश्वरानुग्रहात् शाश्वतं नित्यमव्ययमपक्षयशून्यं निर्विकारं वैष्णवं पदं स्वरूपमाप्नोति ॥ ५६ ॥

यस्मादेवं तस्मात्—

चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः ।
बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥ ५७ ॥
मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ।
अथ चेत्त्वमहङ्कारान्न श्रोष्यसि विनङ्क्ष्यसि ॥ ५८ ॥

चेतसा विवेकबुद्धया सर्वकर्माणि दृष्टादृष्टार्थानि मयीश्वरे संन्यस्य यत्करोषि यदश्नासीत्युक्तन्यायेन समर्प्य मत्परोऽहमेवपरः प्रकृष्टः प्राप्यो यस्य स मत्परः सन् बुद्धियोगं समाहितबुद्धया सि-

द्ध्यसिद्धयोः समत्वबुद्धियोगं हर्षविषादरहितत्वमुपाश्रित्याऽनन्य-शरणत्वेनाङ्गीकृत्य मच्चित्तो मय्येव सर्वात्मनि चित्तं यस्य स त्वं सततं सदा भव ॥ ५७ ॥ ततः किं स्यादिति तदाह—मच्चित्तस्त्वं सर्वदुर्गाणि दुस्तराणि सङ्कटानि संसारहेतुजातानि मत्प्रसादादेव तरिष्यसि, अथ चेद्यदि त्वं मदुक्तमहङ्कारात्पण्डितोऽहमिति गर्वान्न श्रोष्यसि न ग्रहीष्यसि ततस्त्वं विनङ्क्ष्यसि पुरुषार्थात्पतितो भविष्यसि ॥ ५८ ॥

स्वतन्त्रोऽहं परोक्तं न करिष्यामीति त्वया न मन्तव्यं परतन्त्रत्वात्तवेत्याशयेनाह—

यदहङ्कारमाश्रित्य न योत्स्य इति मन्यसे ।
मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥ ५९ ॥

यच्चैतत्त्वमहङ्कारं मिथ्याभिमानमाश्रित्य धार्मिकोऽहं न योत्स्य इति मन्यसे युद्धं न करिष्यामीति निश्चयं करोषि ते तवैष व्यवसायो निश्चयो मिथ्यैवास्ति यस्मात् प्रकृतिः क्षत्रस्वभावस्त्वां युद्धे नियोक्ष्यति, प्रेर्य प्रवर्त्तयिष्यति ॥ ५९ ॥

प्रकृतिपारतन्त्र्यं विशदयति—

स्वभावजेन कौन्तेय ! निबद्धः स्वेन कर्मणा ।
कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत् ॥ ६० ॥

हे कौन्तेय ! स्वभावजेन क्षत्रियस्वभावजेन शौर्यादिना स्वेन स्वकीयेन कर्मणा निबद्धो वशीकृतस्त्वं यत्कर्म युद्धं मोहादविवेकात्कर्तुं नेच्छसि तदवशोऽपि परवश एव करिष्यसि ॥ ६० ॥

ईश्वराधीनताञ्चाह—

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठति ।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥ ६१ ॥

ईश्वर ईशनशीलोऽन्तर्यामी सर्वभूतानां सर्वप्राणिनां हृद्देशेऽन्तःकरणेऽभिव्यक्तस्तिष्ठति सर्वत्रावस्थितोऽपि हे अर्जुन ! किं कुर्वंस्तिष्ठति तदाह यन्त्रारूढानीव सर्वभूतानि देहाभिमानिनः शरीरारूढानि मायया स्वशक्त्या भ्रामयन् सञ्चारयन् तिष्ठति, यथा मायावी छद्मना यन्त्राणि भ्रामयन् तिष्ठति तद्वत् ॥ ६१ ॥

यस्मादीश्वराधीनः संसारस्तस्मात्—

तमेव शरणं गच्छ सर्वभावेन भारत ! ।
तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥६२॥

तमेवेश्वरं शरणमाश्रयं संसारार्त्तिहरणार्थं सर्वभावेन सर्वात्मना मनसा वाचा कर्मणा च गच्छाश्रय हे भारत ! तस्येश्वरस्य प्रसादादनुग्रहात्परामुत्कृष्टां शान्तिमुपरतिमविद्यादिनिवृत्तिरूपां शाश्वतं नित्यं स्थानं च विष्णुपदमद्वितीयकूटस्थात्मस्वरूपं प्राप्स्यसि ॥६२॥



सर्वगीतार्थमुपसंहरन्नाह—

इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया ।
विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥ ६३ ॥

इत्येतत्ते तुभ्यं ज्ञानं ज्ञायतेऽनेनेति ज्ञानमुपदेशः शास्त्रं गुह्याद् गोप्याद् गुह्यतरमत्यन्तं गुह्यं गोप्यं रहस्यं मयाऽऽख्यातं कथितमेतदुक्तमशेषेण समस्तं विमृश्याऽऽलोच्य यथेच्छसि तथा कुरु ॥ ६३ ॥

अतिगम्भीरस्य गीताशास्त्रस्य पौर्वापर्य्येण विमर्शनद्वारा प्रतिपत्तुमसमर्थं प्रति स्वयमेव करुणानिधिस्तस्य सारं संगृह्य कथयति—

सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥ ६४ ॥

सर्वेभ्यो गुह्येभ्योऽपि गुह्यतममत्यन्तरहस्यमुक्तमप्यसकृद् भूयः

पुनरपि मे मम परमं प्रकृष्टं वचो वाक्यं शृणु, पुनः पुनः कथने हेतुमाह दृढमव्यभिचारेणात्यन्तं मे मम त्वमिष्टः प्रियोऽसि ततस्तस्मात्ते तव हितं परं ज्ञानप्राप्तिसाधनं वक्ष्यामि, तद्धि सर्वहितानां हिततमम् ॥ ६४ ॥

किं तदित्यपेक्षायामाह—

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ ६५ ॥

मय्येव मनो यस्य स त्वं मन्मना भव, सदा मामीश्वरमेव चिन्तय, मद्भक्त ईश्वरभक्तः श्रवणादिना मद्भजनकर्त्ता भव, तदर्थं च मद्याजी मद्यजनशीलो भव, मां नमस्कुरु नमस्कारमपि ममैव कुरु, एवं वर्तमानस्त्वं मामेवैष्यसि प्राप्स्यसि मदभेदज्ञानं प्राप्स्यसि, अस्मिन्नर्थे ते तव सत्यं प्रतिजाने सत्यां प्रतिज्ञां करोमि, यतस्त्वं मे प्रियोऽसि, एवं भगवतः सत्यप्रतिज्ञत्वं बुद्ध्वा भगवद्भक्तेरवश्यंभाविमोक्षफलमवधार्य भगवच्छरणैकपरायणो भवेदिति वाक्यार्थः ॥६५॥

कर्मयोगनिष्ठायाः परमरहस्यमीश्वरशरणतामुपसंहृत्याथेदानीमुभयफलभूतं सम्यग्दर्शनं तत्र तत्र विस्तरेण प्रोक्तमुपसंहरति—

सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ६६ ॥

सर्वे च ते धर्माश्च सर्वधर्मास्तान्, धर्मशब्देनात्राधर्मोऽपि गृह्यते नैष्कर्म्यस्य विवक्षितत्वात्, "नाविरतो दुश्चरितात्," "त्यज धर्ममधर्मं च," इत्यादिश्रुतिस्मृतिभ्यः, धर्मशब्देन चात्र "धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः । धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्" ॥ इति मनूक्ता धर्मा न गृह्यन्ते, न वा "अहिंसा सत्यमस्तेयमकामक्रोधलोभता । भूतप्रियहितेहा च धर्मोऽयं सार्व-

वर्णिकः" इत्यादि पुराणोक्ताः साधारणा निवृत्तिप्रधाना आत्मैक्यशरणत्वोपयोगिनो धर्मा गृह्यन्ते, किन्तु सकामाः कर्मरूपा विशेषाः प्रवृत्तिप्रधाना एव गृह्यन्ते धर्माधर्मत्यागविषये च, "त्यज धर्ममसङ्कल्पादधर्मं चाप्यलिप्सया," इत्युक्तम्। सर्वधर्मान् परित्यज्य तत्फलादिसङ्कल्पं त्यक्त्वा, लिप्सात्यागेनाधर्मं च त्यक्त्वा लिप्सामूलकादधर्माद्रहितो भूत्वा मामेकं समं सर्वात्मानं शरणं व्रज, सर्वात्मको हरिर्ममैवात्मा न मत्तोऽन्यदस्तीत्यवधारय सर्वात्मा हरिरेव मम शरणं न कर्मेति निश्चयं वा कुरु, स्वोचितकर्मधर्मकरणेऽप्ययं निश्चय एव सर्वधर्मपरित्यागो न तु धर्म(कर्म) स्वरूपपरित्याग एव तथा कृते सत्यहं त्वा त्वामेवं निश्चितबुद्धिं सर्वपापेभ्यः सर्वधर्माधर्मबन्धनरूपेभ्यो मोक्षयिष्यामि स्वात्मभावप्रकाशकरणेन, उक्तं च दशमे "नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता" अतो मा शुचः शोकं मा कार्षीरित्यर्थः ॥६६॥



समाप्तः शास्त्रार्थः शास्त्रसम्प्रदायविधिमधुना कथयति—

इदं ते नातपस्काय नाभक्ताय कदाचन।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥ ६७ ॥

इदं शास्त्रं ते तव संसारविच्छित्तये मयोक्तं, ते त्वया त्विदमतपस्कायोक्तशारीरादितपोरहितायासंयतेन्द्रियाय कदाचन कस्याञ्चिदवस्थायामपि न वाच्यं, तथा सर्वैरपि न वाच्यं, तपस्विनेऽप्यभक्ताय गुरौ देवे च भक्तिरहिताय कदाचन न वाच्यं, विशेषणद्वययुक्तायाप्यशुश्रूषवे कदापि न च वाच्यं यश्च मामीश्वरमभ्यसूयति मद्गुणे दोषानारोपयति ममेश्वरत्वं न सहते तस्मै तपस्विने भक्ताय शुश्रूषवेऽपि कदाचन न च वाच्यं, तपस्विने भक्ताय शुश्रूषवेऽनसूयवे शास्त्रं वाच्यमिति प्रतिषेधसामर्थ्यादवगम्यते, तत्र मेधाविने

तपस्विने वेति स्मृत्यन्तरे विकल्पदर्शनाच्छुश्रूषाभक्तियुक्ताय भगवत्यसूयारहिताय तपस्विने वाच्यं शुश्रूषाभक्त्यनसूयासहिताय मेधाविने वाच्यं श्रुतिश्चाह "विद्या ह वै ब्राह्मणमाजगाम गोपाय मा सेवधिष्टेऽहमस्मि। असूयकायानृजवेऽयताय न मा ब्रूया वीर्य्यवती तथा स्याम्" ॥ ६७ ॥

सम्प्रदायकर्तुः फलमाह—

य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ ६८ ॥

यः सम्प्रदायप्रवर्त्तकः परमं गुह्यमत्यन्तरहस्यमिमं ग्रन्थं संवादरूपं मद्भक्तेषु मयि भक्तिमत्सु मामीश्वरं प्रत्यनुरक्तेष्वभिधास्यति वक्ष्यति ग्रन्थतोऽर्थतश्च स्थापयिष्यति, यथा मद्भक्ते त्वयि मया स्थापितस्तथा मद्भक्तेषु यो मयि परां भक्तिं कृत्वा भगवतः परमगुरोः शुश्रूषैव मया क्रियत इत्येवं निश्चित्येमं ग्रन्थं स्थापयिष्यति स मामेवैष्यति मुक्तो भविष्यतीत्यर्थः, अत्र संशयो नास्ति, अथवा यो मद्भक्तेषु वक्ष्यति स मयि परां भक्तिं कृत्वाऽसंशयः सन् मामेवैष्यति नान्यमित्यादि नाभक्ताय वाच्यमिति पूर्वमुक्तमेव पुनरत्र भक्तिग्रहणाद्भक्तिमात्रेणापि शास्त्रसम्प्रदाने पात्रं भवतीति गम्यते॥६८॥

न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः।
भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥ ६९ ॥

तस्माच्छास्त्रसम्प्रदायकृतः सकाशादन्यः कश्चिदपि मे प्रियकृत्तमोऽतिशयेन प्रियकृन्मनुष्येषु वर्त्तमानेषु भुवि लोके च नास्ति, नापि तस्मादन्यः कश्चित् प्रियतरो मे भविताऽपि भविष्यति काले न भविष्यतीत्यर्थः ॥ ६९ ॥

अध्यापकस्य फलमुक्त्वाऽध्येतुः फलमाह—

अध्येष्यते च इमं धर्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मतिः ॥ ७० ॥

योऽध्येता धर्म्यं धर्मादनपेतमिममावयोः संवादमध्येष्यते पठिष्यति तेनाध्येत्राऽहं ज्ञानयज्ञेनेष्टः पूजितः स्यां "श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः", इत्युक्तस्य देवतादिविषयस्य ज्ञानयज्ञस्य फलतुल्यमस्य फलं भवतीत्यर्थः, इति मे मतिर्निश्चयः, जपोऽपि ज्ञानात्मकयज्ञो जपरूपेण पाठे कृते ज्ञानयज्ञेनेश्वरः पूजितो भवतीति भावः ॥ ७० ॥

श्रोतुः फलं कथयति—

श्रद्धावाननसूयश्च शृणुयादपि यो नरः ।
सोऽपि मुक्तः शुभाँल्लोकान्प्राप्नुयात्पुण्यकर्मणाम् ॥७१॥

श्रद्धावान् पाठके ग्रन्थे च श्रद्धायुक्तोऽसूयारहितश्च यो नरः शृणुयादपि शब्दातिक्रमुतार्थज्ञानवान्, स श्रोतापि पापान्मुक्तः शुभान् पुण्यकर्मणां लोकान् प्राप्नुयात्, केवलश्रवणमात्रादपि यज्ञाग्निहोत्रादिकर्तॄणां लोके प्राप्नोतीति ॥ ७१ ॥

प्रयत्नमास्थाय सर्वप्रकारेण शिष्यः कृतार्थः कर्तव्य इत्याचार्यधर्मं दर्शयितुमुपदिष्टार्थाग्रहणे ज्ञाते पुनर्ग्राहयिष्याम्युपायान्तरेणेत्यभिप्रायवान् शिष्यस्य शास्त्रार्थग्रहणं विवित्सुः पृच्छति—

कच्चिदेतच्छ्रुतं पार्थ ! त्वयैकाग्रेण चेतसा ।
कच्चिदज्ञानसम्मोहः प्रनष्टस्ते धनञ्जय ! ॥ ७२ ॥

कच्चिदिति प्रशस्तप्रश्ने, हे पार्थ ! एकाग्रेण व्यासङ्गरहितेन चेतसा चित्तेन त्वया मयोक्तमेतच्छास्त्रं श्रुतं किं श्रवणेनावधारितं

किमथवा प्रमादेन नावधारितं किमज्ञानसम्मोहोऽज्ञाननिमित्तः सम्मोहोऽविवेकस्वभावोऽज्ञाननाशात्प्रनष्टस्ते हे धनञ्जय ! ॥ ७२ ॥

श्रीभगवत्कृपया कृतार्थः स्वकृतार्थतां प्रकटयन्—

अर्जुन उवाच

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत ! ।
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ॥ ७३ ॥

मोहोऽज्ञानजो मोहः विपर्ययः सागर इव दुस्तरः समस्तसंसारानर्थहेतुर्नष्टो यस्मात् त्वत्प्रसादान्मयाऽऽत्मधर्मादिविषया स्मृतिर्लब्धा प्राप्ता हे अच्युत ! मोहनाश आत्मस्मृतिलाभश्चेत्येतावदेव सर्वशास्त्रज्ञानफलं तदनेन दर्शितम्, अथेदानीं धर्मादौ गतसन्देहः सन् त्वच्छासने स्थितोऽस्मि, तव वचनमहं करिष्ये, त्वत्प्रसादात्कृतार्थस्य मे कर्तव्यं नास्तीत्यभिप्रायः ॥ ७३ ॥

परिसमाप्तः शास्त्रार्थोऽथेदानीं कथासम्बन्धप्रदर्शनार्थम्—

सञ्जय उवाच

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥ ७४ ॥
व्यासप्रसादाच्छ्रुतवानेतद्गुह्यमहं परम् ।
योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ॥ ७५ ॥

इत्येवं वासुदेवस्य सर्वाश्रयस्य भगवतो महात्मनोऽक्षुद्रस्वभावस्य पार्थस्य चेमं यथोक्तं रोमहर्षणं रोमाणि हृष्यन्त्यनेनेति तं रोमाञ्चकरमद्भुतं विस्मयकरं संवादमश्रौषं श्रुतवानस्मि ॥ ७४ ॥ तं चेमं संवादं व्यासप्रसादात्ततो दिव्यचक्षुर्लाभाद् दिव्यसर्वेन्द्रियोऽहं श्रुतवानस्मि, यदेतत्परमं गुह्यं तत्त्वमस्ति, योगार्थत्वाच्च योगं तं योगेश्वरात्कृष्णात्साक्षात्स्वयं कथयतः श्रुतवान् न तु परम्परातः ॥७५॥

राजन्संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥ ७६ ॥
तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।
विस्मयो मे महान्राजन्हृष्यामि च पुनः पुनः ॥ ७७ ॥

हे राजन् ! केशवार्जुनयोरिममद्भुतं पुण्यं श्रवणादपि पापहरं संवादं श्रुत्वा संस्मृत्य संस्मृत्य च मुहुर्मुहुः हृष्यामि रोमाञ्चितो भवामि हर्षं प्राप्नोमीति वा ॥ ७६ ॥ तच्च भगवताऽर्जुनाय दर्शितं हरेरद्भुतं रूपं संस्मृत्य संस्मृत्य हे राजन् ! मे महान् विस्मयो भवति पुनः पुनः हृष्यामि च ॥ ७७ ॥

श्रीकृष्णार्जुनयोः सम्वादस्य प्रामाण्यार्थं जयाशाशातनार्थं च परममुत्कर्षं दर्शयति—

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ७८ ॥

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे मोक्षसंन्यासयोगो नामाष्टादशोऽध्यायः ॥१८॥

यत्र यस्मिन्पक्षे सर्वयोगानां कर्मयोगादीनां मायाशक्तीनां चेश्वरो योगेश्वरः सर्वयोगबीजश्च कृष्णो वर्त्तते, यत्र च धनुर्धरः पार्थोऽस्ति तत्र पक्षे श्रीराजलक्ष्मीर्विजयः परम उत्कर्षो, भूतिर्विभूतिः श्रियो विशेषो विस्तारो ध्रुवाऽव्यभिचारिणीत्यस्य सर्वत्र सम्बन्धो बोध्यः, नीतिर्नय इत्येवं मम मतिरस्ति ॥ ७८ ॥

निष्कामकर्मयोगेन भक्तियोगेन सर्वदा ।
अन्तःकरणमाशोध्य ज्ञात्वा सर्वात्मकं हरिम् ॥ १ ॥

निर्गुणमपि तत्त्वेन ज्ञात्वाऽऽत्मानं सुनिर्मलम् ।
मोक्षाशामपि संत्यज्य स्वात्मारामो विराजते ॥ २ ॥
ईश्वराल्लभ्यते सर्वं ज्ञानं मोक्षो यशोऽयशः ।
इति निश्चित्य तत्प्रीत्यै कर्मादि विदधद्व्यपि ॥ ३ ॥
सङ्कल्पादीन् परित्यज्य फलाशां च सुदूरतः ।
मोक्षसंन्यासयोगेन युक्तो भवति सर्वथा ॥ ४ ॥
ब्रह्मविद्यार्थयोगा वै प्रोक्ता विद्यात्मकास्तथा ।
ततो गीता भवत्येषा ब्रह्मविद्यास्वरूपिणी ॥ ५ ॥
हर एव हरिः साक्षात्कृपागारश्च यः पुनः ।
तेन गीता विनिर्णीता पुनाति साखिलं जगत् ॥ ६ ॥
स्वमोक्षाय कृतो न्यासो मोक्षसंन्यास उच्यते ।
स कर्तव्यो विरक्तेन विदुषा वा महात्मना ॥ ७ ॥
मोक्षाय कृतसंन्यासाद्योगो भवति निर्मलः ।
मोक्षसंन्यासयोगेन युक्तो मुक्तो न संशयः ॥ ८ ॥
गीताया लभ्यते योगो मोक्षदो ह्यधिकारिभिः ।
परमं पावनं पुण्यं तस्माद्गीता पुनाति सा ॥ ९ ॥

इति श्रीमत्स्वामिहनुमद्दासषट्शास्त्रिविरचितायां सारसंग्राहिकायां टीकायामष्टादशोऽध्यायः ॥ १८ ॥

ॐ शान्तिः शान्तिः शान्तिः

❋ समाप्तश्चेदं सटीकं श्रीमद्भगवद्गीताशास्त्रम् ❋

# सविज्ञप्ति शोधनपत्रम्

मुद्रणव्यवस्थाऽद्यत्वे न समीचीना, सीसकाक्षराणि च प्रायेण कृशानीत्यस्मिन् संस्करणे क-प-र -र-ज, इत्यादीन्यक्षराण्यनुत्थानि पतितानि च, त्रुटिताश्च मात्राः, लुप्तानि च सम्बोधनहलनुस्वारविसर्गाणां चिह्नानि बाहुल्येन दृश्यन्ते । क्वचन क्वचन चाक्षरयोजककृतो बकारवकारयोर्व्यत्यासोऽभूदित्येतेषु कानिचित् स्खलितानि संगृह्याधस्तात् सन्निवेश्यन्ते, सति सन्देहे पाठकैः क्षमापूर्वकं कृपया शोधनपत्रमिदमवश्यमवलोकनीयमिति ॥

| पृष्ठे | पङ्क्तौ | अशुद्धं | शुद्धम् |
|---|---|---|---|
| १ | २० | प्रचीना | प्राचीना |
| ३ | १४ | सर्वेषा | सर्वेषां |
| १७ | २३ | तुप्ता | लुप्ता |
| १९ | १ | कतु | कर्त्तुं |
| ,, | १८ | चाप | चापं |
| २० | ४ | तज्ञं | तज्ज्ञं |
| ,, | ८ | ।तो | यतो |
| २२ | २० | सह नुचिताम | सहानुचितमि |
| २३ | ५ | राष्टाधृतराष्ट | राष्ट्राधृतराष्ट्र |
| ,, | १० | यच्छेयः | यच्छ्रेयः |
| २५ | १२ | परमाथतस्तु | परमार्थतस्तु |
| २७ | १८ | वृत्वा | कृत्वा |
| २८ | १७ | आविनशी | अविनाशी |
| ३० | १० | विपरिण | विपरिणा |
| ३४ | २ | ततोऽ ि। | ततोऽपि |
| ३५ | ७ | क ष्यसि | करिष्यसि |
| ,, | २१ | नास्त | नास्ति |
| ३६ | ७ | दुखतरं | दुःखतरं |
| ,, | १९ | जेष्या म | जेष्यामि |

| पृष्ठे | पङ्क्तौ | अशुद्धं | शुद्धम् |
|---|---|---|---|
| ३७ | १० | याग | योग |
| ३८ | १३ | वदिनः | वादिनः |
| ,, | १९ | ि शेष | विशेष |
| ३९ | ८ | प्रत्ययःन | प्रत्ययो न |
| ४० | २२ | शोधवे | शोधके |
| ४१ | ८ | धनञ्जय | धनञ्जय ! |
| ४२ | २ | प्राप्तः | प्राप्तेः |
| ४४ | ९ | पर्थ ! | पार्थ ! |
| ४५ | १६ | सवभ्यः | सर्वेभ्यः |
| ४८ | १८ | जन्य | जन्यं |
| ५४ | १ | पूव स | पूर्वस |
| ५६ | २ | कमव | कर्मैव |
| ,, | १८ | इतश्चधि | इतश्चाधि |
| ५७ | १५ | भूतयशा | भूतयशो |
| ६१ | १३ | नानुष्ठेयं | नानुतिष्ठेयं |
| ,, | ,, | कर्मणि तदा | कर्माणि तदा |
| ६२ | २२ | महाबाहो | महाबाहो ! |
| ६३ | ७ | भेद | भेदं |
| ७४ | ८ | सिद्धि | सिद्धिं |

| पृष्ठे | पङ्क्तौ | अशुद्धं | शुद्धम् |
|---|---|---|---|
| ७५ | ६ | कत्वे | कत्वेन |
| ७८ | १० | धमाऽधर्मं | धर्माऽधर्मं |
| ,, | २१ | निवध्य | निबध्य |
| ७९ | ५ | चेता | चेतो |
| ९२ | ८ | केवल | केवलं |
| ,, | १० | सङ्ग | सङ्गं |
| ,, | १६ | फल | फलं |
| ९३ | १३ | न्नित्युक्त | न्नित्युक्तं |
| ९४ | २० | मशान | मशानं |
| ९७ | २२ | क्षाभ | क्षोभ |
| ९९ | ५ | श्लाकानाह | श्लोकानाह |
| ,, | १६ | विरक्ता | विरक्तो |
| १०० | ४ | सर्वात्म | सर्वात्मा |
| १०१ | १० | कर्मान्तरे | कर्म्यन्तरे |
| १०३ | ४ | ब्राता | व्राता |
| १०४ | ४ | करस्य | करणस्य |
| १०९ | १० | स्थिता | स्थितो |
| ११० | २० | प्रप्तं | प्राप्तं |
| १११ | ५ | व्याप्नाति | व्याप्नोति |
| ,, | ६ | या वै | यो वै |
| ११२ | १५ | सवस्य | सर्वस्य |
| ,, | १८ | यागिनां | योगिनां |
| ,, | २३ | सूदन | सूदन ! |
| ११३ | १७ | वैराग्येन | वैराग्येण |
| ,, | ,, | कैन्तेय ! | कौन्तेय ! |

| पृष्ठे | पङ्क्तौ | अशुद्धं | शुद्धम् |
|---|---|---|---|
| ११८ | ९ | संम्य | सम्य |
| १२१ | १५ | जगत्सू | जगत् सू |
| १२७ | १५ | अन्तवता | अन्तवतो |
| १३१ | ११ | यश | यशं |
| १३४ | ११ | कवि | कविं |
| ,, | १६ | अणाः | अणोः |
| १३५ | ८ | बदन्ति | वदन्ति |
| १३६ | ६ | पयन्तं | पर्यन्तं |
| ,, | २० | अमिवि | अभिवि |
| ,, | २३ | मोक्षा | मोक्षो |
| १३७ | ७ | बिदः | विदः |
| १३८ | २० | भक्त्वा | भक्त्या |
| १४० | १० | वृत्ति | वृत्तिं |
| १४२ | १० | पयन्त | पर्यन्त |
| ,, | २२ | दयितु | दयितुं |
| १४३ | २० | संसगित्वा | संसर्गित्वा |
| १४४ | ५ | वर्तृतया | कर्तृतया |
| १४५ | १४ | ष्वसक्तं | स्वसक्तं |
| १५० | ६ | तिस्त्र | तिस्त्रो |
| १६१ | १० | निर्वृति | निर्वृत्ति |
| ,, | १२ | ऋतोः | क्रतोः |
| १६२ | १८ | याग | योग |
| ,, | २३ | गात्मारूपेण | गात्मरूपेण |
| १६३ | १९ | विशाम्पतेः | विशाम्पते ! |
| १६८ | ६ | तदमहर्जु | तदहमर्जु |

| पृष्ठे | पङ्क्तौ | अशुद्धं | शुद्धम् |
|---|---|---|---|
| १७२ | २० | नयननि | नयनानि |
| १७५ | १३ | पृथिब्यो | पृथिव्यो |
| १७६ | १७ | विष्णो | विष्णो!॥२४॥ |
| १७९ | १६ | भुक्ष्व | भुङ्क्ष्व |
| १८० | ९ | प्राणम्य | प्रणम्य |
| १८४ | १३ | चतुभुजेन | चतुर्भुजेन |
| ,, | १९ | श्रष्ठं | श्रेष्ठं |
| ,, | २२ | इत्या | इत्या |
| १८५ | ६ | में | मे |
| १८६ | २० | एवविधो | एवंविधो |
| १९३ | ४ | ता व्याघ्रा | ताव्याघ्रा |
| १९५ | २ | तत दार्थ | तत्पदार्थं |
| १९७ | १० | तत्करणं | तत्कारणं |
| १९९ | ६ | भिस्वङ्ग | भिष्वङ्ग |
| २०२ | १ | बर्तते | वर्त्तते |
| ,, | २२ | यज्ञेयं | यज्ज्ञेयं |
| २०३ | ८ | अवणादि | श्रवणादि |
| २०६ | १ | गेषु वेगा | गेषुवेगा |
| २०७ | १ | त्युक्तं | इत्युक्तं |
| ,, | ९ | लक्षणास्या | लक्षणस्या |
| २१३ | २ | मवन्ति | भवन्ति |
| २१५ | ११ | सत्त्व | सत्त्वं |
| २१७ | १७ | सत्क्वात् | सत्त्वात् |
| २१८ | ६ | पद्यम्ते | पद्यन्ते |
| २३० | २ | दोषा | दोषो |
| २३१ | १५ | प्रत्यागा | प्रत्यगा |
| २३५ | ५ | श्रृणु | श्रृणु |
| २३६ | २३ | वत्तन्ते | वर्त्तन्ते |
| २३८ | १ | स्यामीत्ये | स्यामित्ये |
| ,, | ३ | क्रोध | क्रोधं |
| ,, | १२ | आढ्या | आढ्यो |
| २४३ | ४ | श्रृणु | श्रृणु |
| ,, | १० | मुक्त्वा | मुक्त्वो |
| २४६ | ५ | दाषस्यास | दोषस्यासं |
| ,, | ९ | या यशा | यो यशो |
| २४८ | १५ | ध्रवं | ध्रुवं |
| ,, | २१ | शिष्टे: | शिष्टैः |
| ,, | २२ | त्रविध्यं | त्रैविध्यं |
| २५९ | ६ | लाकान् | लोकान् |
| २६१ | १८ | कृत यत् | कृतं यत् |
| ,, | २३ | निर्वत्यं | निर्वर्त्यं |
| २६२ | ११ | धृत्युत ाहा | धृत्युत्साहा |
| २६५ | १५ | ऽमृताप | ऽमृतोप |
| २६७ | १२ | धृतिधैर्यं | धृतिधैर्य्यं |
| ,, | १६ | मावज | भावज |
| २६८ | १७ | स्वमर्णा | स्वकर्मणा |
| २६९ | १६ | निमित्तष्व | निमित्तेष्व |
| २७० | १९ | ब्रह्य | ब्रह्म |

